अथश्रावणमासमाहात्म्यप्रारंभः

श्रीगणेशायनमः  अथश्रावणमासमाहात्म्यंलिख्यते  शौनकउवाच  सूतसूतमहाभागव्यासशिष्यत्व्यकल्म
ष त्वदीयवदनांभोजान्नानाख्यानानिशृण्वतां १ तृप्तिर्नजायतेभूयः श्रवणेच्छाप्रवर्धते कार्तिकस्यचमाहात्म्यंतु
लासंस्थेदिवाकरे २ माघमासस्यमाहात्म्यंमकरस्थेविभावसौ वैशाखमासमाहात्म्यंतथामेषगतेरवौ ३ तत्रतत्रच
येधर्माः कथिताःसर्वशस्त्वया एतेभ्योप्यधिकः कश्चिन्मासश्चेत्तवसंमतः ४ धर्मईशप्रियोनित्यंतत्त्वंकथयसांप्रतं
यच्छ्रुत्वापुनरन्यत्रश्रोतुमिच्छाननोभवेत् ५ श्रद्धालोःश्रोतुरग्रेतुवक्तागोप्यंनकारयेत् ६  सूतउवाच  शृ
णुध्वंमुनयःसर्वेभवतांवाक्यगौरवात् तुष्टोऽहंनचगोप्यंमेभवदग्रेतुकिंचन ७ अदांभिकत्वंतथास्तिक्यमशठत्वंसु
भक्तिता शुश्रूषत्वंविनीतत्वंब्रह्मण्यत्वंसुशीलता ८ ध्रुवत्वंचशुचित्वंचतपस्वित्वानुसूयते एतेद्वादशसंख्याकागु
णाःश्रोतुःप्रकीर्तिताः ९ तेसर्वेऽपिभवत्स्वेवतुष्टस्तत्त्वब्रवीम्यतः सनत्कुमारोमेधावीधर्मजिज्ञासुरानतः १० ईश्व
रंपरिपप्रच्छभक्त्यापरमयायुतः ११ सनत्कुमारउवाच  देवदेवमहाभागयोगिध्येयपदांबुज व्रतानिबहुशः
स्त्वत्तःश्रुताधर्माश्चसर्वशः १२ तथापिश्रोतुमिच्छेकावर्ततेत्वहृदिसांप्रतं द्वादशस्वपिमासेषुमासःश्रेष्ठतमोऽस्तियः

१३ तवप्रीतिकरोऽत्यंतंसिद्धिदः सर्वकर्मणाम् अन्यमासेकृतंकर्मतदेवास्मिन्कृतंयदि १४ स्यादनंतफलंदेवतंमासंवक्तु
मर्हसि तत्रत्यान्सर्वधर्मांश्चलोकानुग्रहकाम्यया १५ ईश्वरउवाच सनत्कुमारवक्ष्यामिसुगोप्यमपिसुव्रत शुश्रूषत्वेन
भक्त्याचप्रीतोऽस्मिविधिनंदन १६ द्वादशस्वपिमासेषुश्रावणोमेऽतिवल्लभः श्रवणार्हंयन्महात्म्यंतेनासौश्रावणोमतः
१७ श्रवणर्क्षंपौर्णमास्यांततोऽपिश्रावणःस्मृतः यस्यश्रवणमात्रेणसिद्धिदःश्रावणोप्यतः १८ स्वच्छत्वात्तुनभस्तुल्यो
नभाइतिततःस्मृतः तत्रत्यधर्मगणनांकःकर्तुंशक्नुयाद्भुवि १९ सर्वतोयत्फलंद्रष्टुंचतुरास्योभवद्विधिः द्रष्टुंयत्फलमा
हात्म्यंसहस्राक्षोऽभवद्वृषा २० अनंतोयत्फलंवक्तुंसहस्रद्वयजिह्वकः किंबहूक्तेनकोप्येतद्द्रष्टुंवक्तुंचनक्षमः २१
एतत्फलामपिसुनेलभंतेनान्यमासकाः सर्वोव्रतमयश्चैषःसर्वधर्ममयस्तथा २२ नैकोपिवासरोयत्रव्रतशून्यःप्रदृश्य
ते प्रायेणतिथयश्चापिव्रतवत्योऽत्रमासिवै २३ अत्राच्यतेमयायद्यदर्थवादोनसोत्रहि आर्तैर्जिज्ञासुभिर्भक्तैस्तथार्था
र्थिभिर्मुमुक्षुभिः चतुर्विधैरपिजनैःसेव्यःस्वस्वेष्टकांक्षिभिः २४ सनत्कुमारउवाच भगवन्यत्त्वयाप्रोक्तंव्रतशून्यो
नवासरः प्रायेणतिथिरप्यत्रतन्ममाचक्ष्वसत्तम २५ कस्यांतिथौकिंव्रतंस्यात्कस्मिन्वारेचकिंव्रतम् तत्रतत्राऽधि॰

शृणु नभः शुक्लद्वितीयायांव्रतमौदुंबराभिधम् २१ गौरीव्रतंतृतीयायांश्रावणेशुक्लपक्षके तथाशुक्लचतुर्थ्यांतु दूर्वागण
पतिव्रतम् २२ विनायकीतितस्याश्चसंज्ञास्यादपरामुने नागानांपूजनेशस्तापंचमीशुक्लपक्षके २३ इमांरौरवकल्पादिं
जानीहिमुनिसत्तम सूपौदनव्रतंषष्ठ्यांसप्तम्यांशीतलाव्रतं २४ पवित्रारोपणंदेव्यावसौप्मृतेऽथवाभवेत् शुक्लकृष्णा
नवम्योस्तुनक्तव्रतविधिस्मृतः २५ दशम्यांशुक्लपक्षेतुआशासंज्ञव्रतंभवेत् पक्षद्वयेविशेषोस्मिन्नेकादश्योस्तुकश्चन २६
पवित्रारोपणंशुक्लद्वादश्यांतुहरेःस्मृतं द्वादश्यांश्रीधरंपूज्यपरांगतिमवाप्नुयात् २७ उत्सर्जनमुपाकर्मसभादीपस्तथै
वच उपाकर्मसभायांतुरक्षाबंधस्ततःपरं २८ श्रवणाकर्मतत्रैवतथासर्पबलिःस्मृतः हयग्रीवस्यावतारःपूर्णिमायां॰
तुसप्तकं २९ नभःकृष्णोतुसंकष्टचतुर्थीव्रतमुच्यते ज्ञेयामानवकल्पादिःश्रावणेकृष्णपंचमी ३० पूर्णावतारःकृष्ण॰
स्यकृष्णाष्टम्यांद्विजोत्तम अवतारःसमभवद्भूतंतत्रमहोत्सवम् ३१ इयंमन्वादिरपिचज्ञातव्यामुनिपुंगव अमायां॰
श्रावणेमासिपिठोराव्रतमुच्यते ३२ कुशानांग्रहणंचैववृषभाणांचपूजनं शुक्लाद्यातिथिमारभ्यतत्तत्तिथिषुदेवताः
३३ वन्हिर्देवःप्रतिपदिद्वितीयाब्रह्मदेवता तृतीयायास्तथागौरीचतुर्थ्यांगणनायकः ३४ सर्पाधिपापंचमीस्यात्षष्ठी

कारीकः किंफलंकीदृशोविधिः २६ केनकेनापिचाचीर्णमुद्यापनविधिश्चकः प्रधानंपूजनंकुत्रजागरश्चापितद्विधिः २७
कोदेवःकुत्रपूज्यःस्यात्सामग्रीपूजनस्यका कस्यव्रतस्यकःकालस्तत्सर्वंकथयप्रभो २८ त्वत्प्रियश्चकथंमासःपवित्रःके
नहेतुना मासेऽस्मिन्नवतारःकः श्रेष्ठश्चाऽयंकुतोऽभवत् २९ अस्मिन्मासेचकेधर्माअनुष्ठेयावदप्रभो प्रश्नेऽपिचकिं
यज्ज्ञानंममाऽस्त्यतवाऽग्रतः ३० अशेषेणसमाचक्ष्वपृष्टादन्यच्चयद्भवेत् जनानांतारणार्थायकृपालोकृपयावद ३१
रवौसोमेभौमवारेबुधेसुरगुरौकवौ शनैश्चरदिनेवापितत्सर्वंवदमेविभो ३२ सर्वेषामादिभूतस्त्वमादिदेवस्ततःस्मृतः
एकस्यविधिबाधाभ्यामन्यबाधाविधीयथा ३३ अन्येषामल्पदेवत्वंमहादेवस्ततस्तथा देवत्रयाश्रयेभ्वत्येउपर्यास्तेऽस्थि
तिस्तव ३४ शिवस्त्वंशुभरूपत्वादघौघहरणाद्धरः तवचैवादिदेवत्वेप्रमाणंशुक्लवर्णकः ३५ प्रकृतौशुक्लवर्णेन्येव
र्णाःस्युर्विकृतिंगताः यतःकर्पूरगौरस्त्वमादिदेवस्ततोह्यसि ३६ गणपत्याधारभूतान्मूलाधाराच्चतुर्दलात् स्वाधि
ष्ठानाभिधात्सम्यास्षड्दलाद्ब्रह्मदैवतात् ३७ मणिपूराद्दशदलान्मंडलाद्विष्णवधिष्ठितात् ब्रह्माविष्णूपरिस्थस्त्वंवदं
तीदंचसुरव्यतां ३८ एकस्यतेऽर्चनाद्देवपचायतनपूजनं जायतेऽन्यसुरेचैवंसंभवेन्नहिसर्वथा ३९ स्वयंशिवस्त्वंवामो

स्यात्स्कंददेवत्ता सप्तम्यांभास्करोदेवः शिवदेवाष्टमीतिथिः ३५ दुर्गाधिपातुनवमीदशम्यंतकदेवता एकादश्यधिपाश्चैवविश्वेदेवाः प्रकीर्तिताः ३६ द्वादश्याश्चहरिः कामस्त्रयोदश्यधिपोमतः चतुर्दश्याः शिवश्चैवपौर्णमास्याः शशीपतिः ३७ अमायांपितरोदेवाएतेतिथ्यधिपाः स्मृताः सदेवस्तत्रपूज्यः स्याद्यस्यदेवस्ययातिथिः ३८ अगस्त्यस्योदयोप्रासेप्रायेणात्रैव-जायते कथयामिचतंकालंशृणुष्वैकमनामुने ३९ सिंहसंक्रांतिदिवसायदाद्वादशयांतिच चत्वारिंशच्चघटिकातदागस्त्योदयोभवेत् ४० सप्ताहानिततः पूर्वमगस्त्यार्घसमाचरेत् द्वादशस्वपिमासेषुआदित्योभिन्नसंज्ञया ४१ तपतेश्रावणेतत्रगभस्तिरितिसंज्ञितः तत्पूजनंचकर्तव्यंमासेस्मिन्भक्तिमन्नरैः ४२ चतुर्षुयानिमासेषुवर्ज्यानिशृणुसत्तम श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ४३ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंत्यजेत् इत्यादीनिसमस्तानितत्रकर्तुमशक्नुवन् ४४ एकस्मिन्श्रावणेमासिकुर्वंस्तत्फलभाग्भवेत् उद्देशोयंमयाप्रोक्तः संक्षेपात्तवमानद ४५ तत्रत्यानांव्रतानांतुधर्माणांमुनिसत्तम केनापिविस्तरोवक्तुंनालंवर्षशतैरपि ४६ ममप्रीत्यैहरेर्वापिकुर्याद्धर्ममशेषतः आवयोर्नहिभेदोस्तिपरमार्थस्तुसर्वदा ४७ कल्पयंत्यत्रयेभेदंतेवैनिरयगामिनः सनत्कुमारतस्मात्त्वंश्रावणेधर्ममाचर ४८ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसं

वादेश्रावणमासमाहात्म्येश्रावणव्रतोद्देशकथनंनामद्वितीयोऽध्यायः २ सनत्कुमारउवाच भगवन्व्रतसंघस्यउद्देशःक
थितस्त्वया तृप्तिर्नजायतेस्वामिन्विस्तराद्वक्तुमर्हसि १ यच्छ्रुत्वाकृतकृत्योहंभविष्यामिसुरेश्वर २ ईश्वरउवाच नक्तव्र
तेनयोगीशश्रावणंयोनयेत्सुधीः द्वादशस्वपिमासेषु सनक्तफलभाग्भवेत् ३ दिनावसानपूर्वंतुनक्तंस्याद्रात्रिभोजनं तत्राद्यत्रिघ
टीस्त्यक्त्वा कालःस्यान्नक्तभोजने ४ ततःसंध्यात्रिघटिकाअस्तादुपरिभास्वतः चत्वारीमानिकर्माणिसंध्यायांपरिवर्जयेत् ५
आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकं गृहस्थयतिभेदेनतद्व्यवस्थांचमेशृणु ६ आत्मनोद्विगुणीछायामंदीभवतिभास्करे
यतेर्नक्तंतुतत्प्रोक्तंननक्तंनिशिभोजनं ७ नक्षत्रदर्शनान्नक्तंगृहस्थस्यबुधैःस्मृतं यतेर्दिनाष्टमेभागेरात्रौतस्यनिषिध्यते ८ न
क्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः यतिश्चविधवाचैवविधुरश्चससूर्यकं ९ विधुरश्चेत्सुत्रवान्स्यात्सतुरात्रौसमाचरेत् अ
नाश्रमोप्याश्रमीस्यादपत्नीकोपिपुत्रवान् १० एवंयथाधिकारंतुकुर्यान्नक्तव्रतंसुधीः अत्रनक्तव्रतीमासेपरांगतिमवाप्नुयात्
११ प्रातःस्नानंकरिष्यामिब्रह्मचर्यव्रतेस्थितः भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयाम् १२ प्रारब्धेऽस्मिन्व्रतेदेवयद्यपूर्णो
म्रियेत्व्यहं तदासंपूर्णतांयातुप्रसादात्तेजगत्पते १३ इतिसंकल्प्यमेधावीमासनक्तव्रतंचरेत् एवंनक्तव्रतंकुर्वन्ममप्रियतमोभ

वेत् १४ विप्रद्वाराऽतिरुद्रेणमहारुद्रेणवास्वयं अभिषेकंमासमात्रंरुद्रेणप्रत्यहंचरेत् १५ तस्यप्रीणाम्यहंवत्सजलधाराप्रियोयतः
कुर्याद्रुद्रेणवाहोमंममप्रीतिकरंपरं १६ स्वस्त्यद्रोचतेऽस्त्वंतंभोज्यंवाभोग्यमेववा संकल्प्याद्विजवर्याय दत्वामासेस्वयंत्यजेत् १७
अतःपरंशृणुमुनेलक्षपूजाविधिंपरं श्रीकामोबिल्वपत्रैश्चदूर्वाभिःशांतिकामकः १८ आयुःकामेनकर्तव्यंचंपकैःपूजनंहरेः
विद्याकामेनकर्तव्यंमल्लिकाजातिभिस्तथा १९ शिवविष्ण्वोःप्रसन्नत्वंतुलसीभिःप्रसिध्यति पुत्रकामेनकर्तव्यंबार्हतैःपूजनंशु
भं २० दुःस्वप्नप्रशमार्थायशस्तंधान्यप्रपूजनं रंगवल्यादिभिर्देवंदेवस्याग्रेविनिर्मितैः २१ पद्मादिभिःस्वस्तिकाद्यैश्चक्राद्यैःपूज
येद्विभुं एवंहिसर्वपुष्पैश्चसर्वकामार्थसिद्धये २२ लक्षपूजांप्रकुर्याच्चेत्सुप्रसन्नोहरोभवेत् उद्यापनंततःकार्यंमंडपंचैवसाधये
त् २३ वेदिकाचप्रकर्तव्यामंडपस्यत्रिभागतः पुण्याहवाचनंकृत्वाआचार्यंवरयेत्ततः २४ गीतवादित्रनिर्घोषैर्ब्रह्मघोषेणभूयसा
प्रविश्यमंडपेतस्मिन्रात्रौजागरणंचरेत् २५ वेदिकायांप्रकर्तव्यंलिंगतोभद्रमुत्तमं तन्मध्येतंडुलैःकुर्यात्कैलासंचसुशोभनं २६
कलशंस्थापयेत्तत्रतास्रंचैवमहाप्रभं पंचपल्लवसंयुक्तंन्यसेद्वस्त्रंसुसूक्ष्मकं २८ सौवर्णींप्रतिमांतत्रस्थापयेत्सार्वतीपतेः पूजां
तत्रप्रकुर्वीतपंचामृतपुरःसरैः २९ धूपैर्दीपैःसनैवेद्यैर्गीतवादित्रनृत्यकैः वेदशास्त्रपुराणैश्चरात्रौजागरणंचरत् ३० ततःप्र

भातसमयेसुस्नातःसुशुचिर्भवेत् स्थंडिलंकारयेत्तत्रस्वशाखोक्तविधानतः ३१ होमंचसतिलाज्येनपायसेनचकारयेत् मूलमंत्रे
णगायत्र्याशिवनाम्नांसहस्रकैः ३२ येनमंत्रेणपूजातुकृतातेनैवहोमयेत् शर्कराघृतमिश्रेणचरुणाजुहुयात्ततः ३३ ततःस्विष्ट
कृतंहुत्वापूर्णाहुतिमनंतरं आचार्यंपूजयेत्सम्यग्वस्त्रालंकारभूषणैः ३४ ब्राह्मणान्पूजयेत्सर्वांस्तेभ्योदद्याच्चदक्षिणां येनयेनप्र
कुर्याच्चलक्षपूजासुमापतेः ३५ तत्तद्दद्यात्सुवर्णेनकृत्वाशंभुंप्रपूजयेत् यदिदीपःकृतस्तेनतद्दानंचैवकारयेत् ३६ सुवर्णवर्तिकां
कृत्वादीपमात्रंचरौप्यकं गोघृतेनसमायुक्तंसर्वकामार्थसिद्धये ३७ समापयेत्ततोदेवंब्राह्मणान्भोजयेच्छतं एवंयःकुरुतेपूजां
तस्यप्रीणाम्यहंमुने ३८ तत्रापिश्रावणेकुर्यात्तदानंत्यायकल्पते स्वप्रीतिविषयःकश्चित्पदार्थस्त्यज्यतेयदि ३९ मदर्पणधियाचा
न्मासितस्यफलंशृणु इहामुत्रचतत्प्राप्तिर्भवेल्लक्षगुणाधिका ४० सकामत्वेतुचैवंस्यान्निष्कामत्वेपरागतिः रुद्राभिषेकंकु
र्वाणस्तत्रत्याक्षरसंख्यया ४१ प्रत्यक्षरंकोटिवर्षंरुद्रलोकेमहीयते पंचामृतस्याभिषेकादमृतत्वंसमश्नुते ४२ तस्मिन्मासेभूमि
शायीफलंतस्यापिचशृणु प्रवालनिर्मितांश्रेष्ठांगजदंतभवामपि ४३ पाटीरनिर्मितांचापिरखचितांनवरत्नकैः निःसीममृदुप
क्षींद्रविशेषांद्विजसत्तम ४४ वरवस्त्रेणसंछन्नांतूलिकाचात्रशोभनां दशोपबर्हणैर्युक्तांशय्यांसलभतेशुभां ४५ रम्यांगना

समायुक्तांरत्नदीपविभूषितां ब्रह्मचर्येणचाप्यत्रवीर्यपुष्टिर्भवेद्दृढा ४६ ओजोबलंदेहदार्ढ्यंयद्धर्मस्योपकारकं प्रत्यक्षेवभवेत्तस्यब्र
ह्मप्राप्तिर्नसंशयः ४७ निष्कामस्यसकामस्यस्वर्गेदेवांगनाशुभा अत्रमौनव्रतधरोमहान्वक्ताप्रजायते ४८ अहोरात्रंदिनेवापि
भुक्तिकालेऽथवापुनः घंटयाःपुस्तकस्यापिव्रतांतेदानमाचरेत् ४९ सर्वशास्त्रप्रवीणःस्याद्वेदवेदांगपारगः वाचस्पतिसमोबु
द्धौमौनमाहात्म्यतोभवेत् मौनिनःकलहोनास्तितस्मान्मौनव्रतंपरं ५० इतिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसन
त्कुमारसंवादेनक्तव्रतलक्षपूजाभूमिशयनमौनादिव्रतकथनंनामतृतीयोऽध्यायः ३ ईश्वरउवाच सनत्कुमारवक्ष्यामि
धारणापारणाव्रतं पुण्याहंवाचयेत्पूर्वमारभ्यप्रतिपद्दिनं १ संकल्पयेन्ममप्रीत्यैधारणापारणाव्रतं एकस्मिन्धारणंकुर्यात्पारणंच
तथापरे २ उपवासोधारणेस्यात्पारणेभोजनंभवेत् समासेमासिचैवात्रकुर्यादुद्यापनंव्रती ३ समासेश्रावणेमासिपुण्याहंकारये
त्पुरा आचार्यंवरयेत्सश्चाद्ब्राह्मणांश्चैवमानद ४ पार्वतीशंकरस्यापिप्रतिमांस्वर्णनिर्मितां पूर्णकुंभेतुसंस्थाप्यपूजयेन्निशिभ
क्तितः ५ रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः प्रातरग्निंसमाधायहोमंकुर्याद्यथाविधि ६ त्र्यंबकेणचमंत्रेणजुहुयाच्चाति
लौदनं तथैवशिवगायत्र्याजुहुयाच्चघृतौदनं ७ षडक्षरेणमंत्रेणपायसंजुहुयात्ततः पूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत्

ब्राह्मणान्भोजयेत्स्वश्चादाचार्यंचैवपूजयेत् एवंकृत्वामहाभागब्रह्महत्यादिपातकैः ९ मुच्यतेनात्रसंदेहस्तस्मात्कुर्यान्महाव्रतं शृणु
मासोपवासस्यश्रावणेविधिमादरात् १० संकल्पयेत्तुप्रतिपद्दिनेप्रातर्व्रतंमुने नारीवापुरुषोवापिसंयतात्माजितेंद्रियः ११ ततोर्च
येदम्भार्यांतुशंकरंलोकशंकरं संपूजयेत्षोडशभिरुपचारैर्वृषध्वजं १२ ब्राह्मणान्पूजयेच्चैववस्त्रालंकरणादिभिः भोजयेच्चयथा
शक्त्याप्रणिपत्यविसर्जयेत् १३ एवंमासोपवासस्तुममप्रीतिकरोभवेत् रुद्रवर्तिविधानंचसंमितंलक्ष्यसंख्यया १४ शृणुष्वावहि
तोभूत्वासर्वसिद्धिकरंनृणां कार्पासतंतुभिःकार्याएकादशभिरादरात् १५ वर्तयस्तारुद्रवर्तीसंज्ञाप्रीतिकरामम श्रावणस्याद्य
दिवसेसंकल्प्यविधिपूर्वकं १६ देवदेवंमहादेवंलक्षवर्तिभिरादरात् नीराजयामिगौरीशंश्रावणेमासिभक्तितः १७ पूजयित्वा
प्रतिदिनंवर्तीनांतुसहस्रतः नीराजयेदंत्यदिनेसहस्राण्येकसप्ततिः १८ अथवाप्रत्यहंदद्यात्सहस्रत्रयमादृतः चरमेत्तुदि
नेदद्यात्सहस्राणित्रयोदश १९ एकस्मिन्वादिनेरुद्रवर्तिलक्षंप्रदीपयेत् सुघृतेनापिबहुनास्निग्धास्ताममवल्लभाः २० पूज
यित्वातुविश्वेशंशृणुयाच्चकथांततः २१ सनत्कुमारउवाच देवदेवजगन्नाथजगदानंदकारक व्रतस्यास्यप्रभावंमेकृ
पांकृत्वावदप्रभो केनचीर्णंव्रतमिदंविधिरुद्यापनेकथं २२ ईश्वरउवाच शृणुवेधात्रयत्नेनव्रतानामुत्तमंव्रतं रुद्रवर्त्या

महापुण्यंसर्वोपद्रवनाशनं २३ प्रीतिसौभाग्यजननंपुत्रपौत्रसमृद्धिदं शंकरप्रीतिजननंशिवलोकेपरंपदं २४ रुद्रवर्तिसमंनास्ति
त्रिषुलोकेषुसुव्रतं अत्रैवोदाहरंतीममितिहासंपुरातनं २५ क्षिप्रानद्यास्तटेरम्यपुरीउज्जयिनीशुभा तस्यामासीत्सुगंधाख्यावा
रस्त्रीत्यतिसुंदरा २६ तयाशुल्कंकृतंस्वीयेसुरतेतुसुदुःसहं सुवर्णानांशतंलोकेप्रतिज्ञांकृतवत्यथ २७ युवानश्चतयाविप्राक्ष्त्र·
शिताश्चसुगंधया राजानोराजपुत्राश्चनग्नीकृत्यपुनःपुनः २८ तेषांभूषागृहीत्वातुधिःकृतास्तुसुगंधया एवंहिबहवोलोका
लुंठितास्तेसुगंधया २९ तस्यास्तुदेहगंधेनक्रोशमात्रंसुगंधितं रूपलावण्यकांतीनांसामतिष्ठाधरातले ३० षट्त्रिंशद्रागभार्याणां
षड्रागाणांचगायने तत्संतस्याअनंतायाःकुशलागानकर्मणि ३१ नृत्येरंभादिकाःसर्वास्तर्जयंतीसुरांगनाः गत्यागजांश्चहंसांश्च
विहसंतीपदेपदे ३२ कामबाणान्प्रेरयंतीकटाक्षैर्भ्रूकृतैश्चतैः कदाचित्सागताक्षिप्रांकौतुकाविष्टमानसा ३३ ददर्शसामनोरम्या
मृषिभिःपरिसेवितां केचिद्ध्यानपराविप्राः केचिज्जपपरायणाः ३४ रताःशिवार्चनेकेचिद्विष्णोःकेचित्प्रपूजने तेषांसध्येवसि
ष्ठोहितयादृष्टोमहामुने तस्याधर्मेभवेद्बुद्धिस्तद्दर्शनमहत्वतः विगताशाजीवनेपिविषयेषुविशेषतः ३६ विनम्रकंधराभूत्वा
प्रणिपत्यपुनःपुनः स्वकर्मपरिहाशयपप्रच्छमुनिपुंगवं ३७ सुगंधोवाच अनाथनाथविप्रेंद्रसर्वविद्याविशारद मया

कृतानियोगीशपापानिसुबहून्यपि तत्सर्वपापनाशायउपायंब्रूहिमेप्रभो ३८ ईश्वरउवाच एवमुक्तस्तयाविप्रोवसिष्ठोमुनिरा
दरात् तस्याःकर्मसविज्ञायसोऽब्रवीद्दीनवत्सलः ३९ वसिष्ठउवाच शृणुष्वावहिताभूत्वा तवपापस्यसंक्षयः येनजायेतस्रु
पयेनतत्सर्वंकथयामिते ४० गच्छवाराणसींभद्रेत्रिषुलोकेषुविश्रुतां गत्वाकुरुष्वतत्क्षेत्रेव्रतंत्रैलोक्यदुर्लभं ४१ रुद्रवर्त्यामहा
पुण्यंशिवप्रीतिकरंपरं कृत्वाव्रतमिदंभद्रेप्राप्स्यसित्वंपरांगतिं ४२ ईश्वरउवाच ततःसाकोशमादायभृत्यंचैवसमित्रकं
गत्वाकाशींव्रतंचक्रेवसिष्ठोक्तविधानतः ४३ ततःसासरणीतीरेतस्मिन्लिंगेलयंययौ ४४ एवंयाकुरुतेनारीव्रतमेतत्सुदुर्ल
भं यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयः ४५ माहात्म्यंशृणुमाणिक्यवतींनामपिसुव्रत व्रतेनतासांविप्रेंद्रमदर्धासनभागिनी
४६ जायतेमत्स्रियासाहियावदाभूतसंप्लवं उद्यापनमथोवक्ष्येव्रतसंपूर्णहेतवे ४७ कलशेस्थापयेद्देवंसुमयासहितंशिवम्
सुवर्णनिर्मितंदेवंवृषभोरोप्यनिर्मितं ४८ विधिनापूजनंकृत्वारात्रौजागरणंचरेत् ततःप्रभातेविमलेस्नात्वानद्यांविधानतः
४९ आचार्यंवरयेद्भक्त्याद्विजैरेकादशैःसह होमश्चैवप्रकर्तव्योघृतपायसबिल्वकैः ५० रुद्रसूक्तेनगायत्र्यामूलमंत्रेणवापुनः
ततःपूर्णाहुतिंहुत्वाआचार्यादीन्प्रपूजयेत् ५१ तथैकादशसद्विप्रान्सपत्नीकांस्तुभोजयेत् एवंयाकुरुतेनारीसर्वपापैःप्र

मुच्यते ५२ कथांश्रुत्वाविधानेनस्थाप्यंसर्वंन्यवेदयेत् अश्वमेधसहस्रस्यफलंभवतिनिश्चितं ५३ इतिश्रीस्कंदपुराणेश्रा
वणमासमाहात्म्येईश्वरसनत्कुमारसंवादेधारणापारणामासोपवासरुद्रवर्तिकथनंनामचतुर्थोऽध्यायः ४ ईश्वर
उवाच माहात्म्यंकोटिलिंगानांपुण्यंवक्तुंनशक्यते एकैकस्यापिलिंगस्यकिंपुनः कोटिसंख्यया १ अशक्तोलक्षकं
कुर्यात्सहस्रमथवाशतं एकस्यापिहिलिंगस्यकरणान्ममसन्निधिः २ षडक्षरेणमंत्रेणपूजाकार्याऽस्मरद्विषः उपचारैःषोड
शभिर्भक्तियुक्तेनचेतसा ३ उद्यापनंचकर्तव्यंग्रहयज्ञपुरःसरं संपादनीयोहोमश्चब्राह्मणांश्चैवभोजयेत् ४ नाकालमर
णंतस्यवंध्यत्वहरणंपरं सर्वापत्तिक्षयकरंसर्वसंपद्विवर्धनं ५ प्रेत्यकैलासवासश्चआकल्पंममसन्निधौ पंचामृताभिषेकं
चयःकुर्याच्छ्रावणेनरः ६ सपंचामृतभोजीस्यात्संपन्नोगोधनेनच अत्यंतंमधुरालापोप्रियश्चत्रिपुरद्विषः ७ अन्नोदनव्र
तीनैवहविष्याशीचयोनरः व्रीह्यादिसर्वधान्यानामक्षय्योसौनिधिर्भवेत् ८ पत्रावल्यांतुभुंजानःस्वर्णभाजनभोजनः शाकव
र्जनतःस्याद्वैशाककर्तानरोत्तमः ९ केवलंभूमिशायीतुकैलासेवासमाप्नुयात् प्रातःस्नानान्नभोमासिअब्दंतत्फलभाङ्नतः १०
जितेंद्रियत्वान्मासेस्मिन्बलमैंद्रियकंभवेत् स्फाटिकेश्ममयेवापिमाल्लेमारकतेपिवा ११ स्वयंभौवास्वयंभौवापोषेधातुमये

पिवा चंदने नवनीते वा अन्यस्मिन्वापि लिंगके १२ सकृज्जापकुर्वाणो ब्रह्महत्याशतं दहेत् सूर्यचंद्रोपरागेषु सिद्धिः क्षेत्रे ऽपि वा क्वचि
त् १३ सिद्धिर्यालक्षजाप्येन सकृत्स्याज्जपतोऽत्र सा अन्यकाले कृता येस्युर्नमस्काराः प्रदक्षिणाः १४ सहस्रेण फलं यत्स्यान्मासे ऽस्मि
न्नेकवारतः मस्यिये श्रावणे मासि वेदपारायणे कृते १५ सर्वेषां वेदमंत्राणां सिद्धिः सम्यक्प्रजायते मासे ऽस्मिन्योरुषं सूक्तं जपते
श्रद्धयान्वितः १६ कृत्वा संख्या सहस्रं तु कलौ स्यात्तु चतुर्गुणं वर्णानां संख्यया वापि सततं कुर्यादतंद्रितः १७ अशक्तो संख्यया॰
र्धं तु शतमानेन वा जपेत् ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः १८ गुरुतल्पे कृते पापे प्रायश्चित्तमिदं परं नास्त्येतत्सदृशं पु॰
ण्यं पवित्रं पापनाशनं १९ विना पौरुषजाप्येन न नयेदेकमप्यहः अर्थवादमिदं ब्रूयात्स नरो निरयी भवेत् २० ग्रहयज्ञः प्रकर्तव्यः स॰
मित्चरु तिलाज्यकैः धूपगंधप्रसूनादिनैवेद्यादिप्रभेदतः २१ तद्रूपाणां च ध्यानादि संपाद्यं च यथायथं कोटिहोमो लक्षहोमो ऽयुत
होमस्तु शक्तितः २२ तिलैर्व्याहृतिभिः कार्यो ग्रहयज्ञाभिधो ऽप्यसौ अथ वक्ष्यामि वाराणां व्रतानि शृणु सांप्रतं २३ तत्रादौ रविवार॰
स्य व्रतं वक्ष्यामि तेऽनघ अत्राप्युदाहरंतीममितिहासं पुरातनं २४ प्रतिष्ठानपुरे रम्ये सुकर्मा नाम वै द्विजः आसीद्दरिद्रः कृपणो भै॰
क्ष्यचर्यापरायणः २५ एकदा स गतो धान्यं याचितुं पर्यटन्पुरं स्त्रियो ददर्श सदने कस्यचिद्गृहमेधिनः २६ चरंत्यो रविवारस्य मिलिता

व्रतमुत्तमं तदोचुस्ताश्च नंदृष्ट्वा आच्छादयतसत्वरं २७ पूजाविधिंततोविप्रः प्रार्थयामासताः स्त्रियः छाद्यतेकिंनुभोसाध्व्योभव
तीभिरिदंव्रतं २८ कथयध्वंकृपांकृत्वाममोपरिदयालवः परोपकारसदृशोधर्मोनास्तिजगत्त्रये २९ साधूनांसमचित्तानांपरार्थःस्वा
र्थएवहि दारिद्र्यपीडितश्चाहंश्रुत्वेदंव्रतमुत्तमं ३० चरिष्यामिविधिंब्रूहिफलंचास्यव्रतस्यहि ३१ स्त्रियऊचुः उन्मादंवाप्रमादं
वाविस्मृतिंवाकरिष्यसि अभक्तिंवाप्यनास्थांवाकथंदेयंतवद्विज ३२ इतितासांवचःश्रुत्वाविप्रेंद्रोवाक्यमब्रवीत् ज्ञानवानस्मिभो
साध्व्योभक्तिमांश्चास्मिसुव्रताः ३३ एवंतद्वचनंश्रुत्वाप्रौढातासुचयाभवत् सावोवाचव्रतंतस्मैयथाभूतंचतद्विधं ३४ श्रावणेशुक्ल
पक्षेतुप्रथमेरविवासरे मौनेनोत्थायावगाहंकुर्याच्छीतोदकेनतत् ३५ स्वनित्यकर्मसंपाद्यनागवल्लीदलेशुभे परिधिद्वादशयुतं
मंडलंतत्रसंलिखेत् ३६ अर्कवद्वर्तुलंसम्यग्रक्तचंदनतःशुभं तत्र सद्वायुतंसूर्यंपूजयेद्रक्तचंदनात् ३७ जानुभ्यामवनींगत्वा
अर्घ्यंद्वादशमंडलैः रक्तचंदनमिश्रंचजपाकुसुमसंयुतं ३८ दद्याद्भक्तयेसम्यक्श्रद्धाभक्तिपुरःसरं रक्ताक्षतैर्जपापुष्पै-
स्तथान्यैरुपचारकैः ३९ नारीकेलस्यबीजंतुखंडशर्करयायुतं नैवेद्यमर्पयित्वातुमंत्रैरादित्यलिंगकैः ४० स्तुवीतद्वादशव
रैर्नमस्कारान्प्रदक्षिणाः षट्तंतुनिर्मितंसूत्रंषड्ग्रंथिभिरन्वितं ४१ अर्पयित्वातुदेवेशंबध्नीयात्तुगलेत्वतत् द्विजायवा

यनंदद्यात्फलैर्द्वादशभिर्युतं ४२ एतद्व्रतप्रकारंनश्रावयेत्कस्यचित्पुरा एवंव्रतेकृतेविप्रनिर्धनोधनमाप्नुयात् ४३ अपुत्रोलभतेपुत्रं कुष्ठीकुष्ठात्प्रमुच्यते बद्धःस्याद्बंधरहितोरोगीरोगेणहीयते ४४ किंबहूक्तेनविप्रेंद्रयद्यदिच्छतिवांछितं तत्तल्लभेत्साधकोसौव्रतस्यास्यप्रभावतः ४५ एवंचतुर्षुवारेषुकदाचिदपिपंचसु उद्यापनंततःकार्यंव्रतसंपूर्णहेतवे ४६ एवंकुरुष्वविप्रेंद्रसर्वंसिद्धिर्भविष्यति नमस्कृत्वातुताःसाध्वीर्विप्रःस्वगृहमाययौ ४७ तथाचकारतत्सर्वंव्रतंचैवयथाश्रुतं स्वकन्यकाद्वयस्यापिश्रावयामासतद्विधिं ४८ तस्यश्रवणमात्रेणदर्शनात्पूजनस्यच स्वरंगनोपमेकन्येजातेतस्यप्रभावतः ४९ तदाप्रभृतिविप्रस्यगृहेलक्ष्मीर्विवेशह नानामार्गैर्निमित्तैश्चलक्ष्मीवानितिसोभवत् ५० कदाचिद्गच्छताराज्ञाविप्रसद्मपुरोध्वना वातायनेस्थितेकन्येदृष्टेनिरुपमेशुभे ५१ देहावयवसंस्थानैर्वस्तुयद्यच्चसुंदरं त्रैलोक्येमर्त्यसंयत्तोतेपद्मचंद्रादिकंचयत् ५२ राजासोहंसमापेदेतत्रैवावस्थितःक्षणं आमंत्र्य ब्राह्मणंसद्यःप्रार्थयामासकन्यके ५३ विप्रोपिहर्षितोभूत्वाप्रादाद्राज्ञेसुताद्वयं राजानंप्राप्यभर्तारंतेऽपिकन्येमुदान्विते ५४ पुत्रपौत्रादिसंपन्नेचक्रतुश्चस्वयंव्रतं व्रतमेतत्समाख्यातंमुनेतवमहोदयं ५५ यस्यश्रवणमात्रेणसर्वान्कामानवाप्नुयात् अनुष्ठानफलंतस्यकिंवर्ण्यंविधिनंदन ५६ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येप्रकीर्णकनानाव्रत

रविवारादिकथनंनामपंचमोऽध्यायः ५ सनत्कुमारउवाच रविवारस्यमाहात्म्यंश्रुतंमेहर्षकारकं सोमवारस्यमाहात्म्यंश्रावणेमा
सिमेवद १ ईश्वरउवाच रविर्मेनयनंतस्यमाहात्म्यमिदमुत्तमं उमासहितमन्नास्त्रस्तस्यसोमस्यकिंपुनः २ माहात्म्यंवर्णनीयंमे
यत्किंचिदपितेब्रुवे सोमश्चंद्रोद्विजराजःसोमःस्याद्यज्ञसाधनं ३ निमित्तानिचतन्नाम्नःशृणुमत्तःसमाहितः मत्स्वरूपोयतोवारस्त
तःसोमइतिस्मृतः ४ प्रदातासर्वराज्यस्यश्रेष्ठश्चैवततोहिसः समस्तयज्ञफलदोव्रतकर्त्रेयतोहिसः ५ तस्यशृणुविधिंविप्रविस्तरा
त्कथयामिते द्वादशोष्वपिमासेषुसोमवारःप्रशस्यते ६ तावत्कर्तुमशक्तश्चेच्छ्रावणेमासिकारयेत् अस्मिन्मासेव्रतंकृत्वा अब्दव्रत
फलंलभेत् ७ श्रावणेशुक्लपक्षेतुप्रथमेसोमवासरे संकल्पयेद्व्रतंसम्यक्शिवोमेप्रीयतामिति ८ एवंचतुर्षुवारेषु भवेयुःपंचवा
यदि प्रातःसंकल्पयेत्तत्रनक्तंचशिवपूजनं ९ उपचारैःषोडशभिःसायंचपूजयेच्छिवं शृणुयाच्चकथांदिव्यामेकाग्रकृतमानसः
१० सोमवारव्रतस्यास्यकथ्यमानंनिबोधमे श्रावणेप्रथमेसोमेगृह्णीयाद्व्रतमुत्तमं सुस्नातश्चशुचिर्भूत्वाशुक्लांबरधरोनरः काम
क्रोधाद्यहंकारद्वेषपैशून्यवर्जितः १२ आहरेच्छ्वेतपुष्पाणिमालतीमल्लिकादिकाः अन्यैश्चविविधैःपुष्पैरभीष्टैरुपचारकैः १३ पू
जयेन्मूलमंत्रेणत्र्यंबकेणततःपरं शर्वायभवनाशायमहादेवायधीमहि उग्रायचोग्रनाथायभवायशशिमौलिने १५ रुद्राय

श्रा·मा·
१०

नीलकंठायशिवायभवहारिणे एवंसंपूज्यदेवेशमुपचारैर्मनोहरैः १६ यथाविभवसारेणतस्यपुण्यफलंशृणु सोमवारे यजंतेयेपार्वं
त्यासहितंशिवं तेलभंत्यक्षयाल्लोकान्पुनरावृत्तिदुर्लभान् १७ अत्रनक्तेनयत्पुण्यंकथयामिसमासतः सप्तजन्मार्जितंपापमभेद्यं
देवदानवैः १८ प्रणश्येन्नक्तभुक्तेननात्रकार्याविचारणा उपवासेनवाकुर्याद्व्रतमेतदनुत्तमं १९ पुत्रार्थीलभतेपुत्रान्धनार्थीलि
भतेधनं यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः २० इहलोकेचिरंस्थित्वाभुक्त्वाभोगान्यथेप्सितान् विमानवरमारुह्यरुद्रलोकेम
हीयते २१ चलंचित्तंचलंवित्तंचलंजीवितमेवच एवंज्ञात्वाप्रयत्नेनव्रतस्योद्यापनंचरेत् २२ उमामहेश्वरौहैमौराजतेवृषभेस्थितौ य
थाशक्त्याप्रकर्तव्यौवित्तशाठ्यंनकारयेत् २३ मंडलंलिंगतोभद्रंदिव्यंवैकारयेच्छुभं तत्रसंस्थापयेत्कुंभंश्वेतवस्त्रयुगान्वितं
२४ ताम्रपात्रंवैणवंवाकुंभस्योपरिविन्यसेत् तस्योपरिन्यसेद्देवमुमयासहितंशिवं २५ श्रुतिस्मृतिपुराणोक्तैर्मंत्रैःसंपूजयेच्छि
वं पुष्पमंडपिकाकार्याविताननैवशोभनं २६ रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः स्वगृह्योक्तविधानेनततोग्निंस्थाप
येद्बुधः २७ ततोहोमंचशर्वाद्यैरेकादशसुनामभिः पालाशाभिःसमिद्भिश्चहुनेदष्टाधिकंशतं २८ यवव्रीहितिलाद्यैश्चआज्या
यस्त्वेतिमंत्रतः बिल्वपत्रैस्त्र्यंबकेणषड्वर्णेनापिवापुनः २९ पूर्णाहुतिंततोहुत्वाकृत्वास्विष्टकृदादिकं आचार्यंपूजयेत्स·

अ·
६·
१०

श्वाङ्गंचतस्मैप्रदापयेत् ३० ब्राह्मणान्भोजयेत्सम्यगादेकादशसुशोभनान् एकादशाघटास्तेभ्योवंशपात्रसमन्विताः
३१ संपूजितंततोदेवंदेवोपकरणानिच आचार्यायततोदद्यात्प्रार्थयेत्तदनंतरं ३२ परिपूर्णंव्रतंमेस्याच्छिवोमेप्रीयता-
मिति बंधुभिःसहभुंजीतततोहर्षपुरःसरं ३३ अनेनैवविधानेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः ३४ शि
वलोकंततोगत्वातस्मिल्लोकेमहीयते कृष्णेनाचरितंपूर्वंसोमवारव्रतंशुभं ३५ नृपैःश्रेष्ठैस्तथाचीर्णमास्तिकैर्धर्मतत्परैः इदंयःशृ
णुयान्नित्यंसोपितत्फलमाप्नुयात् ३६ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येसोमवारव्रतकथनं
नामषष्ठोध्यायः ६ ईश्वरउवाच सनत्कुमारवक्ष्यामिशोभव्रतमनुत्तमं यस्यानुष्ठानमात्रेणअवैधव्यंप्रजायते १ वि-
वाहानंतरंपंचवर्षाणिव्रतमाचरेत् नामास्यमंगलागौरीव्रतंपापप्रणाशनं २ विवाहानंतरंचाद्येश्रावणेशुक्लपक्षके प्रथमंसो
मवारस्यव्रतमेतत्तुकारयेत् ३ पुष्पमंडपिकाकार्याकदलीस्तंभमंडिता नानाविधैःफलैश्चैवपट्टकूलैश्चभूषयेत् ४ तत्रसंस्था
पयेद्देव्याः प्रतिमांस्वर्णनिर्मितां अन्यधातुमयींवापिस्वशक्त्यातत्रपूजयेत् ५ उपचारैःषोडशभिर्मंगलागौरिसंज्ञितां दूर्वा
दलैःषोडशभिरपामार्गदलैस्तथा ६ तावत्संख्यैस्तंदुलैश्चचणानांशकलैस्तथा षोडशोन्मितवर्तीभिस्तावद्दीपांश्चदीपयेत्

७ दध्योदनंचनैवेद्यंतत्रभक्त्याप्रकल्पयेत् समीपंस्थापयेद्देव्याहृषदंचोपलंतथा ८ एवंकृत्वातुपंचाब्दंततउद्यापनंचरेत् मात्रे
दद्याद्वायनंतुप्रकारंशृणुतस्यच ९ प्रतिमांमंगलागौर्याःसुवर्णपलनिर्मितां तदर्धेनतदर्धेनशक्त्यावाप्यथकारयेत् १० तंडुलैः
पूरितेभांडेशक्त्यास्वर्णादिनिर्मिते संस्थाप्यपरिधानीयंरमणीयांचकंचुकीं ११ तयोरुपरिदेव्यास्तुप्रतिमांस्थापयेत्ततः समी
पभागेसंस्थाप्यहृषदंचोपलंतथा १२ रौप्येणनिर्मितंमात्रेएवंदद्यात्तुवायनं षोडशापिसुवासिन्योभोजनीयाःप्रयत्नतः १३
एवंकृतेव्रतेविप्रसौभाग्यंसप्तजन्मसु पुत्रपौत्रादिभिश्चैवरमतेसंपदायुता १४ सनत्कुमारउवाच केनेदंव्रतमाचीर्णंक
स्यजातंफलंपुरा यथास्यात्प्रत्ययःशंभोकृपांकृत्वातथावद १५ ईश्वरउवाच कुरुदेशेपुरूराजाश्रुतकीर्तिरितिश्रुतः
बभूवश्रुतसंपन्नोकीर्तिमान्हतशात्रवः १६ चतुःषष्टिकलाभिज्ञोधनुर्विद्याविशारदः पुत्रादन्यच्छुभंसर्वंतस्यराज्ञोबभू
वह १७ संतानविषयेथासौबहुचिंताकुलोभवत् देव्याआराधनंचक्रेजपध्यानपुरःसरं १८ क्रूरेणतपसातस्यदेवीतुष्टाबभू
वह उवाचवचनंतस्मैवरंवरयसुव्रत १९ श्रुतकीर्तिरुवाच यदिदेविप्रसन्नासिपुत्रंमेदेहिशोभनं अन्यद्देवित्वत्प्रसा
दान्नन्यूनंकिंचिदस्तिमे २० इतितस्यवचःश्रुत्वादेवीप्राहशुचिस्मिता दुर्लभंयाचितंराजन्दास्येतुभ्यंकृपावशात् २१ परंशृणुष्व

राजेंद्रपुत्रश्चेद्गुणवत्तरः ईप्सितश्चेत्षोडशाब्दंजीविष्यतिनचाधिकं २२ रूपविद्याविहीनश्चेच्चिरंजीवीभविष्यति इतिदेव्यावचःश्रु
त्वानृपश्चिंतातुरोऽभवत् २३ भार्ययासहसंमंत्र्यययाचेगुणभूषितं सर्वलक्षणसंपन्नंषोडशाब्दायुषंसुतं २४ आज्ञापयामा
सतदादेवीभक्तंनराधिपं आम्रवृक्षोममद्वारेवर्ततेनृपनंदन २५ तस्यैकंफलमादायपत्न्यैदेहिममाज्ञया भक्षणार्थंचसाधत्रीगर्भं
सद्योनसंशयः २६ हृष्टोराजातथाचक्रेपत्नीगर्भंचसादधौ दशमेमासिसुषुवेपुत्रंदेवसुतोपमं २७ जातकर्मादिकंचक्रेहर्षशोकस
मन्वितः चिरायुरितिनामास्यपिताचक्रेशिवंभजन् २८ प्राप्तेतुषोडशेवर्षेचिंतामापसभार्यकः ततश्चक्रेविचारंसकष्टलब्धोत्व
यंसुतः २९ स्वसमीपेकथंमृत्युर्द्रष्टव्योदुःखदोऽस्यतु काशींप्रस्थापयामासमातुलेनसमंविभुः ३० भ्रातरंप्रार्थयामाससराजपः
त्नीयशस्विनी धृत्वाकार्पटिकंवेषंकाशींप्रतिसुतंनय ३१ मृत्युंजयःप्रार्थितोऽस्तिपुत्रार्थंतुमयापुरा प्रेषयिष्यामिविश्वेशयात्रा
र्थंचजगत्पतेः ३२ तस्मान्नेयःसुतोमेऽद्यपालनीयश्चयत्नतः इतिश्रुत्वास्वसुर्वाक्यंस्वस्त्रीयेनससंययौ ३३ दिनानिकतिचिद्गत्वा
न्नानंदनगरंययौ तत्रराजावीरसेनोनाम्नासर्वसमृद्धिमान् ३४ तत्कन्यामंगलागौरीसर्वलक्षणसंयुता वयोमध्यगतारम्यारूप
लावण्यशालिनी ३५ उपमानानिसर्वाणितुच्छीकृत्योदयंगता नगरोपवनेरम्येसखीभिःपरिवारिता ३६ ततस्तावपिसंप्राप्तौ

चिरायुर्मानवश्वसः विश्रांतिंप्रापतुस्तत्रतासांदर्शनलालसौ ३७ क्रीडंतीनांविनोदेनकुपितात्तत्रकाचन उवाचराजतनयांसारंडेस्य
तिदुर्वचः ३८ श्रुत्वातदशुभंवाक्यमुवाचनृपनंदिनी अयोग्यंभाषसेत्वंकिंमत्कुलेनैवतादृधा ३९ प्रसादान्मंगलागौर्यास्तद्व्रतस्यप्र
भावतः मत्करादक्षतायस्यप्रपतिष्यतिमूर्धनि ४० विवाहेसचिरायुःस्यादल्पायुरपिचेत्सखि ततःसमस्तास्ताःकन्याःस्वंस्वंवेश्म
ययुस्तदा ४१ सएवदिवसोराजकन्यायाःपाणिपीडने राज्ञाबाल्हिकदेशस्यदृढधर्माभिधस्यवै ४२ सुकेतुनाम्नेपुत्रायदातुंसानि
श्चिताभवत् ससुकेतुरविद्यश्चकुरूपोबधिरस्तथा ४३ ततस्तेमंत्रयामासुर्नेयोन्योऽयवरःपरः अथसिद्धेविवाहेचसुकेतुस्तत्रग
च्छतु ४४ ततश्चिरायुषंगत्वायाचिरेमातुलंप्रति देयोऽस्मभ्यमयंबालःकार्यसिद्धिर्हिनोभवेत् ४५ परोपकारतुल्योहिधर्मोनास्त्यप
रोभुवि मातुलस्तद्वचःश्रुत्वाअंतर्हृष्टमनाअभूत् ४६ पूर्वंश्रुतंचोपवनेकन्यावाक्यमनेनयत् एकवारंतथाप्याहयुष्माभिर्याच्य
तेकथं ४७ वस्त्रालंकरणादीनियाच्यंकार्यस्यसाधने नवरोयाच्यतेक्वापिदीयतेगौरवाद्विवः ४८ विवाहंसाधयामासुर्नीत्वात
त्रचिरायुषं सप्तपद्यादिकेजातेरात्रौगौरीगृहांतिके ४९ सहासौमंगलागौर्यासुप्तोहर्षसमन्वितः तदाव्हिषोडशाब्दानिसमाप्ता
निचिरायुषः ५० निशीथेसर्परूपेणकालस्तत्रसमीयिवान् तदंतरेभूपसुताजागृतादैवयोगतः ५१ साददर्शमहासर्पंच·

कंपेभयविव्हला धैर्यंकृत्वातदाबालापूजयामासतोरगं ५२ उपचारैः षोडशभिर्दुग्धंपातुंददौबहु प्रार्थयामासतंसर्पंदीनवाण्या
चतुष्टये ५३ यथान्वेमंगलागौरीकरिष्येव्रतमुत्तमं जीयान्मेपतिरेतस्माच्चिरंजीवेत्तथाकुरु ५४ एतस्मिन्नंतरेसर्पःकरकेप्रविवे
शह कंचुक्यास्वीययासातुचक्रेतन्मुखबंधनं ५५ एतस्मिन्नंतरेभर्ताअंगमोटनपूर्वकं जागृतश्चाऽब्रवीद्भार्यांक्षुधामांबाध
तेप्रिये ५६ मातुःसकाशंगत्वासाआनयामासपायसं लड्डुकादिचतद्दत्तंबुभुजेप्रीतमानसः ५७ हस्तक्षालनकालेतुतद्धस्ता
न्मुद्रिकाऽपतत् तांबूलंभक्षयित्वातुप्रसुप्तःपुनरेवसः ५८ ततःसाकरकंत्यक्तुंनिर्गच्छत्तुविधेर्गतिः हारकांतिबर्हिदृष्ट्वास्फु
रंतींविस्मयंययौ ५९ दृष्ट्वाघटस्थंतंहारंस्वकंठेचदधारसा किंचिन्निशावशेषेतुमातुलस्तांनिनायसः ६० ततस्तेवरपक्षीयाःसु
केतुंतत्रचानयत् दृष्ट्वातंमंगलागौरीउवाचायंनमेपतिः ६१ तामूचुस्तेततःसर्वेकिमिदंभाषसेशुभे परिचायकमस्तीहकिं
चित्तेतद्वदस्वनः ६२ मंगलागौर्युवाच मेदत्तंयेनरात्रौचनवरत्नांगुलीयकं अस्यांगुलौतन्निक्षिप्यपश्यध्वंपरिचाय
कं ६३ यस्माद्दत्तोस्तिमेहारोरात्रौतद्रत्नसंचयः कीदृशोऽनेनवाच्योसौमतिवीरपराक्रितं ६४ किंचाम्रसेचनेरात्रौतस्यदंकुंकु
मान्वितं उरौमेवर्ततेतच्चसर्वेपश्यतमाचिरं ६५ किंचरात्रौभाषणादिभक्षणादिचयत्कृतं तदनेनचवक्तव्यंतदास्यान्मेपतिः

स्वयं ६६ एवंश्रुत्वातुतद्वाक्यंसाधुसाध्विति चाब्रवीत् एकस्यापिनयोगोभूत्तदासवैर्निषेधितः ६७ नदातेवरपक्षीयाजग्मुः सर्वे
यथागतं जनकोमंगलागौर्याः श्रुतकीर्तिः कुरूद्वहः ६८ अन्नपानादिकंसत्रंचकारसुमहामनाः वरपक्षस्यवृत्तांतः श्रुतः कर्णो
पकर्णतः ६९ स्वरूपस्यकुरूपत्वादानीतः कश्चनाहृतः स्थापयामाससौधेतुकन्यांजवनिकावृतां ७० एवंगतेहायनेतुयात्रांकृ
त्वासमातुलः चिरायुः प्रययौतत्रकिंजातमवलोकितुं ७१ तंसाजालांतराद्दृष्ट्वालोकोत्तरमुदान्विता पितरौकथयामासममभर्ता
समागतः ७२ सुतद्रूपंसमाहूयपूर्वोक्तंपरिचायकं दृष्ट्वासर्वमपित्यस्मैददौकन्यांशुचिस्मितां ७३ शिष्टैः परिणयोत्साहं कारयामा
स भूपतिः वस्त्राण्याभरणादीनिसेनामश्वान्गजान्रथान् ७४ प्रस्थापयामासनृपोदत्वान्यदपिभूरिशः पत्न्यासहचिरायुःस
मातुलेनसमन्वितः ७५ स्वपुरंसेनयासार्धंजगामकुलनंदनः श्रुत्वाजनसुखात्तस्यआगतंपितरावुभौ ७६ विश्वासंलेभतु
र्नैवस्यात्कथंदैवमन्यथा एतस्मिन्नंतरेप्राप्तः पित्रोरंतिकमेवसः ७७ पपातपादयोर्भक्त्यापित्रोः स्नेहपरिप्लुतः मूर्ध्न्यवघ्रायतंपु
त्रंपरमांमुदमापतुः ७८ स्नुषापिमंगलागौरीश्वशुरौप्रणनामसा अंकेनिवेश्यतांश्वश्रूःपप्रच्छोदंतमंजसा ७९ स्नुषापिमं
गलागौर्याव्रतमाहात्म्यमुत्तमं कथयामासतत्सर्वंयथावृत्तंमहामुने ८० इत्येतत्कथितंतुभ्यंमंगलागौरिकाव्रतं यएत

च्छृणुयात्कश्चिद्यश्चापिपरिकीर्तयेत् ८१ मनोरथास्तस्यसर्वेसिध्यंत्यत्रनसंशयः ८२ सूतउवाच सनत्कुमारमित्येवकथ
यामासधूर्जटिः सचानंदंपरंलेभेश्रुत्वाकार्यकरंव्रतं ८३ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्ये
मंगलागौरीव्रतकथनंनामसप्तमोऽध्यायः ७ ईश्वरउवाच बुधगुर्वोरथोवक्ष्येव्रतंपापप्रणाशनं यत्कृत्वाश्रद्धयाम
र्त्यःपरांसिद्धिमवाप्नुयात् १ प्रजापतिःशीतरश्मिंद्विजराज्येभ्यषेचयत् सकदाचिद्गुरोर्भार्यांतारानाम्नींददर्शह २ रूपयौ
वनसंपन्नांलावण्यमदगर्विताम् मोहितोरूपसंपत्याकामबाणवशंगतः ३ स्वगृहेस्थापयित्वातुबलात्सबुभुजेचतां एवंबहु
तिथेकालेगतेपुत्रोबभूवह ४ बुधोबुधोरूपशालीसर्वलक्षणसंयुतः अन्वेषयन्गुरुःपत्नींज्ञातवान्शशिसद्मनि ५ ययाचेचंद्रं
हिमेभार्यांत्वंकथंगुरुतल्पगः गुरुतल्पकृतासापान्निष्कृतिस्तेकथंभवेत् ६ महापातकसंयोगेकथंतेबुद्धिराहृता गुप्तमेव
प्रयच्छेमांगुरुभार्यांममप्रियां ७ रहसिप्रायश्चित्तंचकृत्वानिष्कल्मषोभव नोचेदिंद्रसमीपेतेआगःसंकथयाम्यहं ८ इत्येवंब
हुधोक्तोपिनददौतांकलंकतां तदादेवसभांगत्वाकथयामासगीष्पतिः ९ चंद्रेणमेत्वपहृताभार्यातांनददातिसः देवराजो
सिशक्रत्वंदापनीयात्वयाज्ञया १० नचेत्त्वांतत्कृतंपापंसंक्रमिष्यत्यसंशयं राजाराष्ट्रकृतंपापंभुंक्तेशास्त्रविनिर्णयात् ११ दुर्ब

लस्यबलंराजासुराणोत्क्षितिभण्यते इतिश्रुत्वागुरोर्वाक्यंचंद्रमाहूयवासवः १२ आज्ञापयामासरुषादेहिभार्यांगुरोर्विधो अन्यदा
राभिगमनंकेवलंपापसंज्ञितं १३ गुरुदाराभिगमनंमहापातकसंज्ञितं तस्मात्त्वंद्रगुरोर्भार्यांदेहित्वमविचारयन् १४ देवेंद्र
वचनंश्रुत्वानिशापतिरथाब्रवीत् दास्येत्वदाज्ञयाभार्यांपुत्रंनैवददाम्यहं १५ मत्सकाशात्सुतोजातोमभवैभवद्युग्यतः गी
ष्पतिस्त्वाहमत्तोभूत्ततःसंशयिताःसुराः १६ ततस्तेनिर्णयंचक्रुर्माताजानातिचांगजं पप्रच्छुस्तेतदातारांकेनायंगर्भआहितः
१७ सत्यंवदस्वकल्याणिनमिथ्यावक्तुमर्हसि तदालज्जान्विताताराऔरसोयंविधोःसुतः १८ गीष्पतेःक्षेत्रजश्चातोयोग्यः
स्यात्तस्यदीयतां शास्त्रतस्तेविचार्याथददुश्चंद्रायतंबुधं १९ तदाखिंनंगुरुंदृष्ट्वाददौदेवावरंतयोः गच्छस्वत्वंचंद्रगृहंतवाप्य
स्तिसुतोह्ययं २० चंद्रस्यगीष्पतेश्चायंग्रहत्वंयात्वसौसुतः अन्यच्चापिसुराचार्यगृहाणेमंवरंशुभं २१ यःकरिष्यतिमेधावी
भिलित्वायुवयोर्व्रतं तस्यस्यात्सकलासिद्धिःसत्यंसत्यंनसंशयः २२ श्रावणेमासिसंप्राप्तेशंकरस्यमहाप्रिये बुधगुर्वोर्वासरयो
र्येकरिष्यंतिपूजनं २३ नैवेद्यंदधिभक्तेनसाधनेमूलकंभवेत् युवयोर्मूर्तिमालिख्यस्थानभेदात्फलंलभे २४ बालांदोलप-
-रिस्थानेलिखित्वापूजयेद्यदि सपुत्रंलभतेदीर्घायुषंसर्वगुणान्वितं २५ कोशागारेलिखित्वातुपूजयेद्यदिमानवः तस्यको

शाविवर्धतेक्षीयंतेनकदाचन २६ पाकागारेपाकवृद्धिर्देवागारेतुतद्रूपा शय्यागारेपूजनेतुस्त्रीवियोगोनकर्हिचित् २७ धान्यागारे
धान्यवृद्धिरेवंतत्तत्फलंलभेत् सप्तवर्षाणिकृत्वेवंततउद्यापनंचरेत् २८ अधिवास्याह्निपूर्वस्मिन्रात्रौजागरणंचरेत् सुवर्ण
प्रतिमांकृत्वापूजयित्वायथाविधि २९ उपचारैःषोडशभिस्ततोहोमंसमाचरेत् तिलैराज्येनचरुणातथैवचसमिद्वजैः ३० अ
पामार्गाश्वत्थसमयैस्ततःपूर्णाहुतिंचरेत् स्वस्त्रीयमातुलौचैवभोजनीयौप्रयत्नतः ३१ ब्राह्मणान्भोजयेदन्यान्भुंजीतस्वयमे
वच एवंकृतेसप्तवर्षेसर्वान्कामानवाप्नुयात ३२ विद्याकामनयाकुर्याद्वेदशास्त्रार्थविद्भवेत् बुधस्तुबुधतांदद्याद्गुरुस्तुगुरुतांत
था ३३ सनत्कुमारउवाच भगवन्यत्त्वयाप्रोक्तंभोज्यौस्वस्त्रीयमातुलौ एतन्निमित्तंकथययदिवक्तुंक्षमंभवेत् ३४ ई
श्वरउवाच पुराकौचिद्द्विजन्मानौदीनौस्वस्त्रीयमातुलौ दरिद्रोपर्यटंतौतावुदरार्थंकृतश्रमौ ३५ कस्मिंश्चिन्नगरेरम्येगतौधा
न्यंप्रयाचितुं गृहेगृहेपश्यतांतौश्रावणेमासितद्व्रतं ३६ तत्तद्द्वारेव्रतंतत्तद्बुधगुर्वोर्नकुत्रचित् अन्योन्यंतौतदातत्रविचारंचक्रतुः
श्चिरात् ३७ वासराणांतुसर्वेषांव्रतंसर्वत्रदृश्यते बुधगुर्वोर्विनातस्मादावाभ्यांतद्व्रतंशुभं ३८ अनुष्ठेयंयतस्त्वास्तितः
स्मात्कर्तव्यमादरात् विध्यज्ञानात्सरंतस्थसंशयंप्रापतुःपुनः ३९ तावत्तस्यांनिशायांतुस्वप्नोभूद्विधिदर्शनः तथातौचक्र

तुःपश्चात्सरांसंपदमापतुः ४० प्रत्यहंवृद्धिगात्राभूत्संपत्तिःसर्वगोचरा एवंकृत्वासमवर्षैःपुत्रपौत्रादिसंयुतौ ४१ साक्षाद्भूतौबुध
गुरूवरंचददतुस्तयोः आवाभ्यामावयोर्यस्माद्व्रतमेतत्प्रवर्तितं ४२ इतिचारभ्यतस्माद्यः करिष्यतिशुभंव्रतं स्वकीयमातुलौतेन
भोजनीयोप्रयत्नतः ४३ एतद्व्रतप्रभावेणसर्वसिद्धिःपराभवेत् अंतेचास्मल्लोकवासोयावच्चंद्रदिवाकरौ ४४ इतिश्रीस्कंद
पुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येबुधगुरुव्रतकथनंनामाष्टमोऽध्यायः ८ ईश्वरउवाच इतःपरंप्र
वक्ष्यामिशुक्रवारकथानकं यत्कृत्वाश्रद्धयामर्त्योमुच्यतेसर्वसंकटात् १ अत्रैवोदाहरंतीममितिहासंपुरातनं सुशीलोनाम
राजासीत्पाण्ड्यवंशसमुद्भवः २ बहुप्रयत्नशीलोपिअपत्यंनैवचाप्नुवन् तस्यभार्यासुकेशीतिनाम्नासर्वगुणान्विता ३ अपत्यंनय
दालेभेमहाचिंतामवापसा स्त्रीस्वभावात्तदावस्त्रखंडानिप्रतिमासिके ४ बध्वोदरंतदाचक्रेमहासाहसमानसा अन्वेषयद्गर्भि
णींसास्वप्रसूत्यनुसारिणीं ५ भाविनादैवयोगेनगृहिणीतत्पुरोधसः गर्भिण्यासीत्तदाराज्ञःपत्नीकपटकारिणी ६ प्रसूतिका
रिणींकांचित्तत्कार्येसान्ययोजयत् दत्वाबहुधनंतस्यैसूतिकायैरहोगता ७ राजाचक्रेपुंसवनंतथैवाऽनवलोभनं सीमंतोन्नय
नेंकालेमहाहर्षसमन्वितः ८ तस्याःप्रसूतिसमयंश्रुत्वासापितथाकरोत् आद्यगर्भवतीयस्मात्सापुरोधःकुटुंबिनी ९ अज्ञा॰

प्रसूतिकाकृत्येसूचिकावचनेनस्थिता तांसूचिकावंचयंतीचक्रे तन्नेत्रबंधनं १० प्रेषयामासतंपुत्रंसाराजमहिषींप्रति कस्यचि
द्धस्ततः शीघ्रमज्ञातमपिकेनचित् ११ राज्ञीगृहीत्वातंपुत्रंप्रसूतास्मीत्यघोषयत् पुरोधः स्त्रीनेत्रबंधंमोक्षयामाससूचिका १२
सहानीतंमांसपिंडंतस्यैप्रादर्शयच्चसा विस्मयंचैवखेदंचस्वयंचक्रेतदग्रतः १३ किमरिष्टमिदंजातंपत्याकार्यंचशांतिकं ·
संततिर्नास्तिचेन्मास्तुस्वदिष्ट्याजीवितास्म्यहो १४ परंसंशयितासासीत्प्रसवस्पर्शचिंतनात् १५ ईश्वरउवाच राजा
श्रुत्वापुत्रजन्मजातकर्माद्यकारयत् गजानश्वान्रथांश्चैवब्राह्मणेभ्योददौनृपः १६ बद्धान्कारागृहेसर्वान्मोचयामासहर्षितः
सूतकांतेनामकर्मसंस्कारान्सर्वतोकरोत् चक्रेप्रियव्रतइतिनामपुत्रस्यभूमिपः १७ श्रावणेमासिसंप्राप्तेपुरोधोदधिता
सती जीवंतिकांशुक्रवारेपूजयामासभक्तितः १८ कुड्येविलिख्यतन्मूर्तिंबहुबालसमन्वितां पुष्पमालिकयापूज्यपंच
दीपैरदीपयत् १९ गोधूमपिष्टसंभूतेस्तानभक्षयतस्वयं अक्षतांश्चैवचिक्षेपयत्रमेबालकोभवेत् २० तत्रत्वयारक्षणीयो
जीवंतिकरुणार्णवे इतिप्रार्थ्यकथांश्रुत्वानमश्चक्रेयथाविधि २१ जीवंतिकाप्रसादेनदीर्घायुर्बालकोभवत् ररक्षतम·
होरात्रंदेवीतन्मातृगौरवात् २२ एवंकालेगतेराजाकालधर्मंमुपेयिवान् पितृभक्तोऽथतत्पुत्रश्चक्रेतत्सांपरायिकं २३

प्रियव्रतोभिषिक्तोभूद्राज्येमंत्रिपुरोहितैः पालयित्वाप्रजाराज्यंभुक्त्वासकतिचित्समाः २४ पित्रर्णस्यविमोक्षायगयांगंतुंप्रच
क्रमे राज्यभारममात्येषुस्थाप्यद्वन्द्वेषुभक्तितः २५ राजभावंपरित्यज्यवेषंकार्पटिकंदधे मार्गमध्येक्वचित्तुर्यांकस्यचिद्गृहमे
धिनः २६ चक्रेवासंगृहेतस्यप्रसूतागृहिणीत्वभूत् पुराषष्ठ्यापचमेन्हितत्सुताः पंचमारिताः २७ तदापिपंचमदिनेप्यासीत्त
त्रनृपोगतः रात्रौसुप्तेनृपेषष्ठीबालंनेतुंसमागता २८ जीवंत्यावारितासातुनृपमुल्लंघ्यमाव्रज षष्ठीनिषेधाज्जीवंत्यासाजगा
मयथागतं २९ जीवितंपंचमदिनेबालंलेभेगृहाधिपः एतत्प्रभावःप्रायोयंप्रार्थयामासतंनृपं ३० राजन्नद्यतनेचान्हितववासो
स्तुमेगृहे तवप्रसादान्मेबालःषष्ठोयंजीवितःप्रभो ३१ एवंसंप्रार्थितस्तेनउवासकरुणानिधिः ततोगतोगयांराजाप्रवृत्तःपिं
डपातने ३२ विष्णुपदेतत्रकिंचिद्दृत्वाश्चर्यंसभूत्तदा पिंडस्यग्रहणार्थंहिनिःसृतंतुकरद्वयं ३३ परंविस्मयमापन्नःसंशयंप्राप
भूपतिः ब्राह्मणानुमतःपश्चात्पिंडंविष्णुपदेददौ ३४ पप्रच्छब्राह्मणंकंचिज्ज्ञानिनंसत्यवादिनं सचाहब्राह्मणस्तस्मैपितृ
द्वयकराविमौ ३५ किमिदंतद्गृहेगत्वामात्रेपृच्छवदिष्यति ततश्चिंतापरोदुःखीव्हदिनानाविचारयत् ३६ यात्रांकृत्वातत्रया
तोयत्रासौजीवितःशिशुः तदापिपंचमदिनमासीत्सैवप्रसूतिका ३७ द्वितीयोप्यभवत्पुत्रोरात्रौषष्ठीसमाययौ पुनश्चजीवं

तिकयानिषिद्धासाब्रवीच्चतां ३८ एतस्यावश्यकंकिंते एतन्मात्राच किंव्रतं क्रियतेहियतस्त्वंच एनंरक्षस्यहर्निशं ३९ षष्ठीवाक्य
मितिश्रुत्वाजीवंतिःप्राहसुस्मिता तंनिमित्तंनिशिद्दष्टुंजाग्रदासीन्मृषास्वपन् ४० संवादमुभयोराजासुश्रावसकलंतदा श्राव
णेभृगुवारेतुएतन्मातासमार्चने ४१ व्रतस्यानियमंसर्वंकुरुतेतंवदामिते परिधत्तेनवसनंहरितंकंचुकींतथा ४२ नधारयति
तद्वर्णकाचकंकणकंकरे कदापिनोल्लंघयतितंडुलक्षालनोदकं ४३ नैवगच्छत्यधस्ताच्चहरिसल्लवमंडपं छकलस्यचशाकं
स्नानास्नातिहरिवर्णतः ४४ सर्वमेवंममप्रीत्यैमारयिष्यामिमासुतं श्रुत्वासर्वंनृपःप्रातर्जगामस्वपुरंप्रति ४५ मत्युद्गतानागरि
कादेशिकाःसर्वएवहि पप्रच्छमातरंराजात्वयाजीवंतिकाव्रतं ४६ क्रियतेतुकथंमातर्नवेद्मीतिचसाब्रवीत् साद्गुण्यार्थंतु
यात्रायाब्राह्मणांश्चसुवासिनीः ४७ इच्छन्नृपोभोजयितुंव्रतंचापिपरीक्षितुं सुवासिनीभ्योवस्त्राणिकंचुक्यःकंकणानि
च ४८ आगंतव्यंभोजनार्थंसर्वाभीराजसद्मनि ततःपुरोधसःपत्नीतत्रदूतमुवाचह ४९ हरिद्वर्णमयाकिंचिद्धृत्युतेनक
दाचन दूतोनिवेदयामासराज्ञेतस्याःप्रभाषितं ५० राजासर्वंरक्तवर्णंतस्यैसंप्रेषयच्छुभं अंगीकृत्यचतत्सर्वंसापिरा
जगृहंययौ ५१ पूर्वद्वारेतंडुलानांहस्ताक्षालनजंजलं मंडपंचहरिद्वर्णंहस्तान्यद्वारतोययौ ५२ राजापुरोधसःपत्नीं—

नत्वापप्रच्छचाखिलं निमित्तंनियमस्यास्यसाप्रोवाचव्रतंभृगौ ५३ तंदृष्ट्वातुतदात्यंतंप्रस्नुतौतत्पयोधरौ सिषिंचतुस्तंराजा
नंधाराभिः सर्वतस्तनौ ५४ गयायांकरस्पर्शेनदेव्याः संवादतस्तथा स्तनयोः प्रस्रवाच्चैवराजाप्रत्ययमापन्नः ५५ पालिकांमा
तरंगत्वापप्रच्छविनयान्वितः मातर्मातर्ब्रूहिसत्यंवृत्तांतंममजन्मनः ५६ श्रुत्वासुकेशिनीप्राहयाथातथ्येनसर्वशः त्वद्दृष्टो
भूत्वानमस्त्वके पितरौस्वस्यजन्मदौ ५७ संपत्त्यावर्धयामासतौपरांमुदमापतुः एकस्मिन्दिवसेराजाजीवंतींप्रार्थयन्निशि
५८ जीवंत्ययंजन्मदोमेगयायांचकरौकथं तदास्वप्नगतादेवीप्राहसंशयनाशकं ५९ मयात्वत्प्रत्ययार्थेयंकृतामायानसंशयः
एतत्तेसर्वमाख्यातंश्रावणेभृगुवासरे ६० एतद्व्रतमनुष्ठायसर्वान्कामानवाप्नुयात् ६१ इतिश्रीस्कंदपुराणेईश्वरसन
त्कुमारसंवादेश्रावणमासमाहात्म्येशुक्रवारजीवंतिकाव्रतकथनंनामनवमोऽध्यायः ९ ईश्वरउवाच अतःपरंप्रव
क्ष्यामिमंदवारविधिंतव सनत्कुमारयत्कृत्वामंदत्वंनैवजायते १ श्रावणेमासिदेवानांत्रयाणांपूजनंशनौ नृसिंहस्यशनेश्चै
व अंजनीनंदनस्यच २ कुड्येस्तंभेथवालिख्यनृसिंहप्रतिमांशुभां हरिद्रायुक्तचंदनेनलक्ष्म्यासहजगत्पतिं ३ संपूज्यनील
पुष्पैश्चरक्तैः पीतैश्चशोभनैः नैवेद्यंखिचडीसंज्ञंशाककुंजरसंज्ञितं ४ स्वयंचैवतदश्नीयाद्ब्राह्मणांश्चैवभोजयेत् तिलतै

लंघृतस्नानंनृसिंहस्यप्रियंभवेत् शनैश्चरदिनेतैलंप्रशस्तंसर्वकर्मसु अभ्यज्याब्राह्मणास्तद्वत्तुवाभिन्यस्तुतैलतः ६ स्वयमभ्य
ज्यचस्नायात्कुटुंबसहितः शनौ माषान्नंचप्रकर्तव्यंप्रीणातिनरकेसरी ७ एवंचतुर्षुवारेषुश्रावणेमासितद्व्रतं कुर्वीततस्यस
दनेलक्ष्मीःस्थिरतराभवेत् ८ धनधान्यसमृद्धिश्चअपुत्रःपुत्रवान्भवेत् इहलोकेसुखंभुक्त्वाअंतेवैकुंठमाप्नुयात् ९ दिव्या
पिनीचसत्कीर्तिर्नृसिंहस्यप्रसादतः एतत्तेकथितंसौम्यनृसिंहव्रतमुत्तमं एवंशनिप्रीणनायकर्तव्यंतच्छृणुष्वभो स्वयंजब्रा
ह्मणमेकंतुतदभावेतुकंचन ११ अभ्यज्यतिलतैलेनस्नापयेदुष्णवारिणा नृसिंहोक्तेनचान्येनभोजयेच्छ्रद्धयान्वितः १२
तैलंलोहंतिलान्माषान्दद्यात्कंबलमेवच शनैश्चरप्रीणनायशनिर्मेप्रीयतामिति १३ शनैश्चरस्याभिषेकंतिलतैलेनकारयेत्
प्रशस्ताअक्षतास्तस्यपूजनेतिलमाषयोः १४ ध्यानंतस्यचवक्ष्यामिशृणुष्वावहितोमुने शनैश्चरःकृष्णवर्णोमंदःकाश्यपगो
त्रजः १५ सौराष्ट्रदेशसंभूतःसूर्यपुत्रोवरप्रदः दंडाकृतिमंडलेस्यादिंद्रनीलसमद्युतिः १६ बाणबाणासनधरःशूलधृग्गृ
ध्रवाहनः यमाधिदैवतश्चैवब्रह्मप्रत्यधिदैवतः १७ कस्तूर्यगुरुगंधःस्यात्तथागुग्गुलधूपकः कृसरान्नप्रियश्चैवविधास्यः
परिकीर्तितः १८ प्रतिमापूजनेचास्यकार्यालोहमयीशुभा अस्योद्देशेनपूजायांदानेकृष्णोद्विजोत्तमः १९ कृष्णावस्त्रयुगंद

घाद्द्याद्गांकृष्णावत्सकां एवंसंपूज्यविधिवत्प्रार्थयेच्चस्तुवीतच २० यःपुनर्नष्टराज्यायनीलायपरितोषितः ददौनिजंमहाराज्यंस
मेसौरिःप्रसीदतु २१ शनिंनीलांजनप्रख्यंमंदचेष्टाप्रसारिणं छायामार्तंडसंभूतंनमस्यामिशनैश्चरं २२ नमस्तेकोपासंस्थाय
पिंगलायनमोस्तुते प्रसादंकुरुदेवेशदीनस्यप्रणतस्यच २३ एवंस्तुत्वाप्रार्थयित्वाप्रणमेच्चपुनःपुनः पूजनेवैदिकोमंत्रःशं
नोदेवीरितिस्मृतः त्रैवर्णानांचशूद्राणांनाममंत्राःप्रकीर्तिताः यएवंविधिनामंदंपूजयेत्तुसमाहितः २५ तदीयंतुभयंतस्यस्व
प्नेपिनभविष्यति एवमेतद्व्रतंविप्रयेकरिष्यंतिमानवाः २६ वासरेवासरेमासेश्रावणेमासिभक्तितः तेषांशनैश्चरकृतापीडा
देशेपिनोभवेत् २७ प्रथमोवाद्वितीयोवाचतुर्थःपंचमोपिवा सप्तमश्चाष्टमोवापिनवमोद्वादशोपिवा २८ जन्मराशेःस्थि
तोमंदःपीडांचकुरुतेतदा शमग्निरितिमंत्रस्यतत्प्रसादंजपोमतः २९ इंद्रनीलमणेर्दानंप्रदद्यात्तस्यतुष्टये अतःपरंप्रव-
क्ष्यामिहनुमत्तुष्टयेविधिं ३० शनिवारेश्रावणेच अभिषेकंसमाचरेत् रुद्रमंत्रेणतैलेनहनुमत्प्रीणनायच ३१ तैलमिश्रित
सिंदूरलेपंतस्यसमर्पयेत् जपाकुसुममालाभिरर्कमालाभिरेवच ३२ मालाभिर्मंदाराभिश्चवटकानांतथैवच पूजयेदं
जनीपुत्रंतथान्यैरुपचारकैः ३३ यथाविधियथावित्तंश्रद्धाभक्तिसमन्वितं जपेद्द्वादशनामानिहनुमत्प्रीतयेबुधः ३४

हनुमानंजनीसूनुर्वायुपुत्रोमहाबलः रामेष्टः फाल्गुनसखः पिंगाक्षोमितविक्रमः ३५ उदधिक्रमणश्चैवसीताशोकविनाशकः
लक्ष्मणप्राणदाताचदशग्रीवस्यदर्पहा ३६ द्वादशैतानिनामानिप्रातरुत्थाययः पठेत् नाशुभंजायतेतस्यसर्वसंपत्प्रजायते
३७ श्रावणेमंदवारेषुएवमाराध्यवायुजं वज्रतुल्यशरीरंस्यादरोगोबलवान्नरः ३८ वेगवान्कार्यकरणेबुद्धिवैभवभूषितः
शत्रुः संक्षयमाप्नोतिमित्रवृद्धिः प्रजायते ३९ वीर्यवान्कीर्तिमांश्चैवप्रसादादंजनीजनेः आंजनेयालयेलक्षं हनुमत्कवचंपठे
त् ४० अणिमाद्यष्टसिद्धीनांसाधकः स्वामितामियात् यक्षराक्षसवेतालादर्शनात्तस्यवेगतः ४१ पलायंतेदशदिशः कंपि
ताभयविह्वलाः अश्वत्थालिंगनंचैवअश्वत्थस्यचपूजनं ४२ मंदभिन्नेनकर्तव्यःस्पर्शोऽश्वत्थस्यसत्तम शनावालिंगनंत·
स्यसर्वसंपत्समृद्धिदं पूजनंसप्तवारेषुतत्रापिश्रावणेधिकं ४३ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमा
समाहात्म्येशनैश्चरनृसिंहहनुमत्पूजनादिशनैश्चरकृत्यकथनंनामदशमोध्यायः १० सनत्कुमारउवाच व्रतव्र
तानिसर्वाणित्वत्तोदेवश्रुतानिमे तववागमृतंपीत्वातृप्तिर्मेनैवजायते १ श्रावणेनसमोमासोनास्त्यन्यःप्रतिभातिमे अ
थातस्तिथिमाहात्म्यंकथयस्वजगत्प्रभो २ ईश्वरउवाच मासानांकार्तिकःश्रेष्ठस्तस्मान्माघःपरोमतः ततोऽपिमाध

वः श्रेष्ठः सहस्राक्षापि हरिप्रियः ३ विश्वरूपेण चत्वारो मासाश्चैते मम प्रियाः द्वादशस्वपि मासेषु श्रावणः शिवरूपकः ४ तिथयः श्रावणे
मासि सर्वाश्च व्रतसंयुताः प्राधान्यतस्तथापि त्वां वच्मि काश्चित्सुशोभनाः ५ तिथिवारविभिन्नं तु व्रतमाद्यं वदामि ते प्रतिपच्छ्रा
वणे मासि यदा सोमयुता भवेत् ६ सोमवारास्तदा पंच पतंत्यत्राह्नि मासिके रोटकाख्यं व्रतं तत्र कर्तव्यं श्रावणे नरैः ७ सार्धमास
त्रयं वापि रोटकाख्यं व्रतं भवेत् लक्ष्मीवृद्धिकरं प्रोक्तं सर्वकामार्थसिद्धिदं ८ विधानं तस्य वक्ष्यामि शृणुष्वावहितो मुने श्रावणस्य
सिते पक्षे प्रतिपत्सोमवासरे ९ प्रातः संकल्पयेद्विद्वान्करिष्ये रोटकव्रतं अद्यारभ्य सुरश्रेष्ठ कृपांकुरु जगद्गुरो १० दिने दिने प्र
कर्तव्या पूजा देवस्य शूलिनः बिल्वपत्रैरखंडैश्च तुलसीपत्रकैस्तथा १० नीलोत्पलैश्च कमलैः कल्हारैः कुमुदैस्तथा चंपकैर्मा
लतीपुष्पैः कुविंदैरर्कपुष्पकैः ११ अन्यैर्नानाविधैः पुष्पैर्ऋतुकालोद्भवैः शुभैः धूपैर्दीपैश्च नैवेद्यैः फलैर्नानाविधैरपि १२ नै
वेद्यमर्पयेन्मुख्यं रोटकानां विशेषतः कर्तव्या रोटकाः पंच पुरुषाहारमानतः १३ द्वौ तु विप्राय दातव्यौ द्वाभ्यां च भोजनं मतं एको
देवाय दातव्यो नैवेद्यार्थं सदा बुधैः १४ शेषपूजां विधायाथ अर्घ्यं दद्याद्विचक्षणः रंभाफलं नारिकेलं जंबीरं बीजपूरकं खर्जूरीक
र्कटी द्राक्षा नारिंगं मातुलिंगकं अक्षोटकं च दाडिंबं यच्चान्यदृतुसंभवं १६ प्रशस्तमर्घ्यदाने स्यात्तस्य पुण्यफलं शृणु सप्तसप्ता

गरसंयुक्तां भूमिं दत्वा तु यत्फलं १७ तत्फलं समवाप्नोति व्रतं कृत्वा विधानतः पंचवर्षं प्रकर्तव्यमतुलं धनमीप्सुभिः १८ पश्चादु-
द्यापनं कुर्याद्रोटकाख्यं व्रतस्य तु उद्यापने तु कर्तव्यो हेमरूप्यौ च रोटकौ १९ पूर्वेद्युरधिवास्याथ प्रातर्होमं समाचरेत् सर्पिषा शिव
मंत्रेण बिल्वपत्रैश्च शोभने २० एवं कृते व्रते तात सर्वान्कामानवाप्नुयात् सनत्कुमार वक्ष्यामि द्वितीयायां व्रतं शुभं २१ यत्कृत्वा
श्रद्धया मर्त्यो लक्ष्मीवान्पुत्रवान्भवेत् औदुंबराभिधं चैतद्व्रतं पापप्रणाशनं २२ श्रावणे मासि संप्राप्ते द्वितीयायां शुभे तिथौ प्रातः
संकल्प्य विधिवद्व्रतं कुर्याद्विचक्षणः २३ नारी वाथ नरो वापि पात्रं स्यात्सर्वसंपदां साक्षादुदुंबरः पूज्यस्तदभावे तु कुड्यके २४ लि-
खित्वा पूजयेत्तत्र चतुर्भिर्नाममंत्रकैः उदुंबर नमस्तुभ्यं नमस्ते हेमपुष्पक २५ सजंतुफलयुक्ताय नमो रक्तांडशालिने तत्राधिदेव
ते पूज्ये शिवः शुक्रस्तथैव च २६ त्रयस्त्रिंशत्फलान्यस्य गृहीत्वा भागमाचरेत् एकादश ब्राह्मणाय दद्यात्तावंति देवते २७ तावंति
स्वयमश्नीयान्नान्नाहारस्तु तद्दिने शिवं शुक्रं च संपूज्य रात्रौ जागरणं चरेत् २८ एवं कृत्वा व्रतं तात वर्षाण्येकादशैव तु पश्चादु-
द्यापनं कुर्याद्व्रतसंपूर्णहेतवे २९ उदुंबरः सुवर्णेन फलपुष्पदलान्वितः तत्र संपूजयेद्विद्वान्प्रतिमे शिवशुक्रयोः ३१ प्रातर्होमं च
रेच्चैव उदुंबरफलैः शुभैः कोमलैरल्पमात्रैश्च संख्यया चाष्टोत्तरं शतं ३२ उदुंबरसमिद्भिश्च तिलैराज्यैश्च होमयेत् एवं समाप्य-

होमंतु आचार्यंपूजयेत्ततः ३२ ब्राह्मणान्भोजयेत्सश्चाच्छक्तंशक्तोदशाथवा एवंव्रतेकृतेवत्सफलंयत्स्याच्छृणुष्वतत् ३३ बहुजंतु
फलोवृक्षोयथायंसाधकस्तथा भवेदनेकसुतवान्वंशवृद्धिस्तथाभवेत् ३४ हेमपुष्पैर्यथावृक्षस्तथालक्ष्मीप्रदोभवेत् अद्याव
धिनकस्यापिव्रतमेतत्प्रकाशितं ३५ गोप्याद्गोप्यतरंचैव तवाग्रेकथितंमया नैवात्रसंशयःकार्योभक्त्याचैतद्व्रतंचरेत् ३६ इ
तिश्रीस्कंदपुराणेश्रावणमासमाहात्म्येईश्वरसनत्कुमारसंवादेप्रतिपद्रोटकव्रतद्वितीयोदुंबरव्रतकथनंनामैकादशोध्यायः ११
ईश्वरउवाच अतःपरंप्रवक्ष्यामिस्वर्णगौरीव्रतंशुभं श्रावणेशुक्लपक्षेतु तृतीयायांविधानतः १ प्रातःस्नात्वानित्यकर्मकृ
त्वासंकल्पमाचरेत् पार्वतीशंकरौपूज्यौषोडशैरुपचारकैः २ देवदेवंसमागच्छप्रार्थयेहंजगत्पते इमांमयाकृतांपूजांगृहाणसु
रसत्तम ३ वायनानिप्रदेयानिदंपतीभ्यस्तुषोडश भवान्याश्चमहादेव्याव्रतसंपूर्णहेतवे ४ प्रीतयेद्विजवर्यायवायनंप्रददाम्य
हं धानाषोडशपक्वान्नैर्वेणुपात्राणिषोडश ५ कुर्याद्वस्त्रादिभिर्युक्तान्याहूयद्विजदंपतीन् व्रतसंपूर्णतार्थंतुब्राह्मणेभ्योददाम्य
हं ६ स्वलंकृताःसुवासिन्यःपातिव्रत्येनभूषिताः ममकार्यसमृध्यर्थंप्रतिगृह्णंतुशोभनाः ७ एवंषोडशवर्षाणिअष्टौचत्वारिवा
पुनः एकवर्षंतुसद्योवाकृत्वाचोद्यापनंचरेत् ८ पूजांतेचकथांश्रुत्वावाचकंसंप्रपूजयेत् ९ सनत्कुमारउवाच केनचीर्णं

व्रतमिदंमाहात्म्यंचास्यकीदृशं उद्यापनंकथंकार्यंतत्सर्वंवदमेप्रभो १० ईश्वरउवाच साधुपृष्टंमहाभागकथयामितवा
ग्रतः स्वर्णगौरीव्रतंनामसर्वसंपत्करंनृणां ११ पुरासरस्वतीतीरेसुविलाख्यामहापुरी तत्रचंद्रप्रभोनामराजासीद्धनदोपमः
१२ तस्यास्तांरूपलावण्येसौंदर्येस्मरविभ्रमे महादेवीविशालाख्येद्विभार्येकमलेक्षणे १३ तयोःप्रियतराज्येष्ठातस्यासी
न्नृपतेर्मता सकदाचिद्वनंभेजेमृगयासक्तमानसः १४ सिंहशार्दूलवाराहवनमाहिषकुंजरान् हत्वाबभ्रामतृष्णार्तःसराजा
विपिनंमहत् १५ चक्रकारंडवाकीर्णंचंचरीकपिकाकुलं उत्फुल्लमल्लिकाजातिकुमुदोत्पलमंडितं १६ अपूर्वमटवींसोसौ
ददर्शापारसासरः समासाद्यसरस्तीरंपीत्वाजलमनुत्तमं १७ भक्त्यागौरींसमर्चयंतंददर्शाप्सरसांगणं किमेतदितिपप्र
च्छराजाराजीवलोचनः १८ स्वर्णगौरीव्रतमिदंक्रियतेस्माभिरुत्तमं सर्वसंपत्करंनृणांतत्कुरुष्वनृपोत्तम १९ राजो
वाच विधानंकीदृशंब्रूतकिंफलंविस्तरान्मम ताऊचुर्योषितःसर्वास्तृतीयायांनभोयुजि २० कर्तव्यंव्रतमेतद्धिस्वर्ण
गौरीतिसंज्ञितं पार्वतीशंकरौपूज्यौभक्त्यापरमयामुदा २१ दोरकंषोडशगुणंबध्नीयाद्दक्षिणेकरे नरोवामेतुनारीणांगले
वाबंधनंमतं २२ तंकृत्वासोपिजग्राहव्रतंनियतमानसः गुणैःषोडशभिर्युक्तंदोरकंदक्षिणेकरे २३ बध्नाभिदेवदेवेशिम

सादंकुरुमेवरं एवंदेव्याव्रतंकृत्वाआजगामनिजंगृहं २४ पप्रच्छदोरकंहस्तेदृष्ट्वाज्येष्ठातिकोपना त्रोटयित्वाचचिक्षेपबाह्य॰
शुष्कतरूपरि २५ नकर्तव्यंनकर्तव्यमितिराज्ञिवदत्यपि तेनसंस्पृष्टमात्रेणतरुःपल्लवितोभवत् २६ तद्दितीयाततोदृष्ट्वाविस्म
याकुलिताभवत् तत्रस्थंदोरकंछिन्नंगृहीत्वासाबबंधह २७ ततस्तन्मासमाहात्म्यात्सत्युःप्रियतराभवत् ज्येष्ठाव्रतापचारे
णसात्यक्तादुःखितावनं २८ प्रययौसामहादेवींध्यायंतीमनसाचह मुनीनामाश्रमेपुण्येनिवसंतीक्वचित्क्वचित् २९ निवा
रितामुनिवर्यैर्गच्छपापेयथासुखं धावंतीविपिनंघोरंनिर्विण्णानिषसादह ३० ततस्तत्कृपयादेवीप्रादुरासीत्तदाग्रतः तांदृ
ष्ट्वादंडवद्भूमौनत्वास्तुत्वानृपप्रिया ३१ जयदेविनमस्तुभ्यंजयभक्तवरप्रदे जयशंकरवामांगेजयमंगलमंगले ३२ ततोभक्त्या
वरंलब्ध्वागौरीमभ्यर्च्ययद्व्रतं चक्रेतस्यप्रभावेणभर्तातांचानयद्गृहं ३३ ततोदेव्याःप्रसादेनसर्वान्कामानवापसा ततस्ता
भ्यांनृपोराज्यंचक्रेसर्वसमृद्धिमान् ३४ अंतेशिवपदंप्राप्यकांताभ्यांसहितोनृपः ३५ यःशोभनंव्रतमिदंकुरुतेशिवायाः
कुर्यान्ममप्रियतरोभविताचगौर्याः प्राप्यश्रियंसमधिकंसुविशत्रुसंघंनिर्जित्यनिर्मलपदंसशिवस्ययाति ३ एतस्योद्यापन
विधिंसावधानमनाःशृणु शुभेतिथौशुभेवारेचंद्रताराबलान्विते ३७ मंडपेऽष्टदलेपद्मेकुंभंधान्योपरिन्यसेत् पूर्णपात्रं-

ताम्रमयंपलषोडशनिर्मितं ३८ तिलपूर्णंतत्रदेवीशंकरप्रतिमेन्यसेत् श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतिनं ३९ वेदोक्ते
नप्रतिष्ठाचकर्तव्यातुयथाविधि सम्यक्पूजांतुसंपाद्यरात्रौजागरणंचरेत् ४० प्रातःपूजांततःकृत्वाततोहोमंसमाचरेत् ग्रह
होमंपुराकृत्वाप्रधानंजुहुयात्ततः ४१ तिलाश्चयवसंमिश्रा आज्येनचपरिप्लुताः द्रव्यप्रधानेसंख्यातुसहस्रमथवाशतं ४२
आचार्यंपूजयेत्सम्यग्वस्त्रालंकारधेनुभिः वायनानिचदेयानिब्राह्मणांश्चैवभोजयेत् ४३ दंपतीभोजयेच्चैवसंख्ययाषोडशैव
तु भूयसींदक्षिणांदद्यात्स्वस्यवित्तानुसारतः बंधुभिःसहभुंजीतहर्षोत्सवसमन्वितः ४४ इतिश्रीस्कंदपुराणेईश्वर
सनत्कुमारसंवादेश्रावणमासमाहात्म्येतृतीयायांस्वर्णगौरीव्रतकथनंनामद्वादशोऽध्यायः १२ सनत्कुमारउवाच
केनव्रतेनभगवन्सौभाग्यमतुलंभवेत् पुत्रपौत्रधनैश्वर्यंमनुजःसुखमेधते तन्मेवदमहादेवव्रतानामुत्तमंव्रतं १ ई
श्वरउवाच अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतं भगवत्यापुराचीर्णंपार्वत्याश्रद्धयासह २ सरस्वत्यामहेंद्रेणविष्णु
नाधनदेनच अन्यैश्चदेवैर्मुनिभिर्गंधर्वैःकिंनरैस्तथा चीर्णमेतद्व्रतंसर्वैःपुराप्रोक्तंमुनिसत्तम ३ चतुर्थीयाभवेच्छुद्धान
भोमासिस्तुपुण्यदा तस्यांव्रतमिदंकुर्यात्सर्वपापौघनाशनं ४ गजाननंचतुर्थ्यांतुएकदंतंविषादितं विधायहेम्नाविघ्नेशं

हेमपीठासनेस्थितं ५ तदाहेममयीदूर्वांतदाधारेव्यवस्थितं संस्थाप्यविघ्नहर्तारंकलशेताम्रभोजने ६ वेष्टितेरक्तवस्त्रेणस
र्वतोभद्रमंडले पूजयेद्रक्तकुसुमैः पत्रिकाभिश्चपंचभिः ७ अपामार्गशमीदूर्वातुलसीबिल्वपत्रकैः अन्यैःसुगंधैःकुसुमै
र्यथालब्धैःसुगंधिभिः ८ फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् यथावदुपचारैश्चपूजयेद्गिरिजासुतं ९ प्रतिमायांस्वर्णम
य्यांनिर्मितायांयथाविधि आवाहयामिविघ्नेशमागच्छतुकृपानिधिः १० रत्नबद्धमिदंहैमंसिंहासनमनुत्तमं आसनार्थं
मिदंदत्तंप्रतिगृह्णातुविघ्नराट् ११ उमासुतनमस्तुभ्यंविश्वव्यापिन्सनातन विघ्नौघंछिंधिसकलंमम पाद्यंददामिते १२
गणेश्वरायदेवायउमापुत्रायवेधसे अर्घ्यमेतत्प्रयच्छामिगृहाणभगवन्मम १३ विनायकायशूरायवरदायनमोनमः
इदमाचमनीयंतेददामिप्रतिगृह्यतां १४ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं स्नानार्थंतेमयादत्तंगृहाणसुरपुंगव·
सिंदूरेणयथालक्ष्मकुंकुमैरंजितंमया वस्त्रयुग्ममिदंदत्तंप्रतिगृह्णनमोस्तुते १६ लंबोदरायदेवायसर्वविघ्नापहारिणेउ
मांगमलसंभूतचंदनंप्रतिगृह्यतां १७ अक्षताश्चसुरश्रेष्ठरक्तचंदनचर्चिताः मयानिवेदिताभक्त्यागृहाणसुरसत्तम
१८ चंपकैःकेतकीपत्रैर्जपाकुसुमसंघकैः गौरीपुत्रंपूजयामिप्रसीदतुममोपरि १९ अनुग्रहायलोकानांदानवानांव

धायच अवतीर्णः स्कंदगुरुर्धूपंगृह्णातुवैमुदा २० परंज्योतिः प्रकाशाय सर्वसिद्धिप्रदायच दीपंतुभ्यंप्रदास्यामि महादेवा-
त्मनेनमः २१ गणानांत्वेतिनैवेद्यमर्पयेन्मोदकादिकं अन्नंचतुर्विधंचैवपायसंलड्डुकादिकं २२ कर्पूरैलादिसंयुक्तंनानावल्ली
दलान्वितं तांबूलंतेप्रदास्यामिमुखवासार्थमादरात् २३ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः दक्षिणांतेप्रदास्यामि त्वतः
शांतिंप्रयच्छमे २४ गणेश्वरगणाध्यक्षगौरीपुत्रगजानन व्रतसंपूर्णतांयातुत्वत्प्रसादादिभानन २५ एवंसंपूज्य विघ्नेशंयथा
विभवविस्तरैः सोपस्करंगणाध्यक्षमाचार्यायनिवेदयेत् २६ गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणं एतत्त्वद्वचनाद्यपू-
र्णतांयातुसुव्रतं २७ एवंयः पंचवर्षाणिकृत्वोद्यापनमाचरेत् ईप्सितांल्लभतेकामान्देहांतेशांकरंपदं २८ यद्वावर्षत्रयं-
कुर्यात्सर्वसिद्धिमवाप्नुयात् उद्यापनंविनायस्तुकरोतिव्रतमुत्तमं २९ सर्वंनिष्फलतांयातियथाविध्यपियत्कृतं उद्यापनदि
नेप्रातस्तिलैः स्नानंसमाचरेत् ३० हेम्नः पलात्तदर्धार्धात्कृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिस्तुप्रपूजयेत् ३१
मंत्रैस्तुदशभिर्भक्त्याश्रद्धयासहितोनरः गणाधीशनमस्तुभ्यमुमापुत्राघनाशन विनायकेशपुत्रेतिसर्वसिद्धिप्रदाय
क एकदंतेभवक्त्रेतितथामूषकवाहन ३२ कुमारगुरवेतुभ्यमितिनामपदैःपृथक् पूर्वेद्युरधिवास्यैवप्रातर्होमंसमा

चरेत् ३४ दूर्वाभिर्मोदकैश्चैव ग्रहहोमपुरःसरं पूर्णाहुतिं ततो हुत्वा आचार्यादीन्प्रपूजयेत् ३५ गां सवत्सां घटोध्नीं च दद्याद्वित्तानु
सारतः एवं कृते व्रते वत्स सर्वान्कामानवाप्नुयात् ३६ मदीयप्रियपुत्रस्य व्रतेनाहं च तोषितः भुवि दत्वा सर्वभोगं ददाम्यंते च सद्ग
तिं ३७ यथा शाखाप्रशाखाभिर्दूर्वा वृद्धिंगता भवेत् तथैव पुत्रपौत्रादिसंततिर्वृद्धिगामिनी ३८ इत्येतत्कथितं गुह्यं दूर्वागण
पतिव्रतं श्रेष्ठाच्छ्रेष्ठतरं चैव कर्तव्यं सुखमीप्सुभिः ३९ इति श्रीस्कंदपुराणे ईश्वरसनत्कुमारसंवादे श्रावणमासमाहा-
त्म्ये दूर्वागणपतिव्रतकथनं नाम त्रयोदशोऽध्यायः १३ ईश्वर उवाच अतः परं प्रवक्ष्यामि श्रावणे शुक्लपक्षके पंच
म्यां यच्च कर्तव्यं तच्छृणुष्व महामुने १ चतुर्थ्यामेकभुक्तं तु नक्तं स्यात्पंचमीदिने कृत्वा स्वर्णमयं नागमथवा रौप्यसंभवं २
कृत्वा दारुमयं वापि अथवा मृन्मयं शुभं पंचम्यामर्चयेद्भक्त्या नागं पंचफणान्वितं ३ द्वारस्योभयतो लेख्या गोमयेन विषो
ल्बणाः पूजयेद्विधिवच्चैव दधिदूर्वांकुरैः शुभैः ४ करवीरैर्मालतीभिर्जातिपुष्पैश्च चंपकैः तथा गंधैरक्षतैश्च धूपैर्दीपैर्मनो
हरैः ५ ब्राह्मणान्भोजयेत्तस्मा इतमोदकपायसैः अनंतं वासुकिं शेषं पद्मनाभं च कंबलं ६ तथा कर्कोटकं नागं नागमश्व
तथाष्टमं धृतराष्ट्रं शंखपालं कालीयं तक्षकं तथा ७ हरिद्रया चंदनेन कुड्ये नागकुलाधिपान् नव कर्दमैः संलिख्य पूजयेत्कु

सुमादिभिः ८ वल्मीकेपूजयेन्नागान्दुग्धंचैवतुपाययेत् घृतयुक्तंशर्करात्यंयथेष्टंचार्पयेद्बुधः ९ लोहपात्रेपोलिकादि
नकुर्यात्तद्दिनेनरः गोधूमपायसंकुर्यान्नैवेद्यार्थंतुभक्तितः १० भर्जिताश्चणकाश्चैवव्रीहयोयावनालकाः अर्पणीयाः
श्चसर्पेभ्यःस्वयंचैवतुभक्षयेत् ११ बालकेभ्योऽर्पणीयाश्चइदादंताभवंतिहि वल्मीकस्यसमीपेतुगायनंवाद्यमेवच
स्त्रीभिःकार्यंभूषिताभिः कार्यश्चैवोत्सवोमहान् एवंकृतेकदाचिच्चसर्पतोनभयंभवेत् १३ अन्यच्चशृणुयाहिमलोकानां
हितकाम्यया कथयिष्यामिकिंचित्तेतच्छृणुष्वमहामुने १४ नागदष्टोनरोवत्सप्राप्यमृत्युंव्रजत्यधः अधोगत्वाभवे-
त्सर्पस्तामसोनात्रसंशयः १५ पूर्वोक्तविधिनासर्वमेकभक्तादिकारयेत् नागनिर्माणपूजादिविप्रैःसहतथादरात् १६
एवंद्वादशमासेषुमासिमासिव्रतंचरेत् पंचम्यांशुक्लपक्षस्यपूर्णेसंवत्सरेपुनः १७ ब्राह्मणांश्चयतींश्चैवनागानुद्दि
श्यभोजयेत् इतिहासविदेनागंकांचनंरत्नचित्रित १८ गांचदद्यात्सवत्सांवैसर्वोपस्करसंयुतां दानकालेपठेदेतत्स्म
रन्नारायणंविभुं १९ सर्वगंसर्वदातारमनंतमपराजितं येकेचिन्मेकुलेसर्पदष्टाःप्राप्ताःह्यधोगतिं २० व्रतदाने
नगोविंदमुक्तिभाजोभवंतुते इत्युच्चार्याक्षतैर्युक्तंसितचंदनमिश्रितं २१ वासुदेवाग्रतोभक्त्यातोयेतोयंविनि

क्षिपेत् अनेनविधिनासर्वेयेमरिष्यंतिवामृताः २२ सर्पतस्तेभियास्यंतिस्वर्गतिंमुनिसत्तम एवंसर्वान्समुध्दृत्यस्वकुलजान्कु
लनंदन २३ प्रयातिशिवसान्निध्यंसेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनोयः सर्वमेतत्फलंलभेत् २४ नक्तेनभक्तिस
हिताः सितपंचमीषुयेपूजयंतिसुभगान्कुसुमोपहारैः तेषांगृहेष्वभयदाहिभवंतिसर्पाहर्षान्विताः मणिमयूखविभासि
तांगाः २५ प्रतिग्रहंयेचकुर्युर्गृहदानस्यवाडवाः प्रयांतिसर्पतांतेपिघोरांभुक्त्वातुयातनां २६ अंतकालेचयेकेचिन्ना
गहत्यावशादिह मृतापत्याअपुत्रावाभवंतिमुनिसत्तम २७ कार्पण्यवशतःस्त्रीणांसर्पतांयांतिकेचन निक्षेपानृत
वादाच्चकेचित्सर्पाभवंतिहि २८ अन्यैश्चापिनिमित्तैर्येसर्पतांयांतिमानवाः उपायोयंविनिर्दिष्टःसर्वेषांनिष्कृतोपरः
२९ वित्तशाठ्यविहीनेनकृताचेन्नागपंचमी तद्दितार्थेहरिःशेषः सर्वनागाधिपोविभुः ३० बद्धांजलिःप्रार्थयतेवासुकि
श्चसदाशिवं शेषवासुकिविज्ञप्त्याशिवविष्णूप्रसादितौ ३१ मनोरथांस्तस्यसर्वान्कुरुतःपरमेश्वरौ नागलोकेतुतत्ता
न्भोगान्भुक्त्वातुविविधान्बहून् ३२ ततोवैकुंठमासाद्यकैलासंवापिशोभनम् शिवविष्णुगणोभूत्वालभतेपरमंसुखं
३३ एतत्तेकथितंवत्सनागानांपंचमीव्रतं अतःपरंकिमन्यत्त्वंश्रोतुमिच्छसितद्वद ३४ इतिश्रीस्कंदपुराणेईश्व

रसनत्कुमारसंवादेश्रावणमासमाहात्म्येनागपंचमीव्रतकथनंनामचतुर्दशोध्यायः १४ सनत्कुमारउवाच श्रु
तमाश्चर्यजनकंनागानांपंचमीव्रतं षष्ठ्यांकथयदेवेशाकिंव्रतंकीदृशोविधिः १ ईश्वरउवाच शुक्लपक्षेश्रावणेतु
षष्ठ्यांकार्यंव्रतंशुभं सूपौदनाख्यंविप्रेंद्रमहामृत्युविनाशनं २ शिवालयेगृहेवापिशिवंसंपूज्ययत्नतः सूपौदनस्यनैवेद्य
मर्पयेद्विधिसंयुतः ३ आम्रस्यलवणंशाकंसाधनेपरिकल्पयेत् नैवेद्यस्यपदार्थैस्तुवायनंब्राह्मणस्यच ४ यएतद्विधि
नाकुर्यात्तस्यपुण्यमनंतकं अत्रैवोदाहरंतीममितिहासंपुरातनं ५ राजासीद्रोहितोनामबहुकालमपुत्रवान् पुत्रार्थी
सतपश्चक्रेमहत्परमदारुणं ६ प्रारब्धेनास्तितेपुत्रोबोधितोपिसवेधसा निर्बंधान्ननिवृत्तोभूत्तपसःसोतिलालसः ७
ततःसंकटमापन्नोवेधाःप्रादुरभूत्पुनः पुत्रोदत्तस्तवमयाअल्पायुःसभविष्यति ८ पत्नीराजामंत्रयेतांवंध्यात्वंतुगमि
ष्यति अपुत्रत्वापवादश्चअलमित्येवजायतां ९ ततोब्रह्मवरात्पुत्रोहर्षशोकपरोभवत् जातकर्मादिसंस्कारांश्चक्रेरा
जायथाविधि १० राज्ञीसादक्षिणानामराजाचैवसरोहितः शिवदत्तइतिप्रेम्णाचक्रतुर्नामतस्यतौ ११ उपनीतश्च
तनयोराज्ञातुभयचेतसा विवाहंनचकारास्यभूमिपालोमृतेर्भयात् १२ तदाषोडशवर्षेसौमरणंप्रापपुत्रकः चिं

तामापपरांराजाब्रह्मचारिस्मृतिंस्मरन् १३ येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि तत्कुलंक्षयमायातिसोपिदुर्गतिमापतेत्
१४ सनत्कुमारउवाच देवदेवजगन्नाथपरिहारोस्तिवानवा अस्तिचेच्चवदस्वाद्यदोषशांतिर्यथाभवेत् १५ ईश्व
रउवाच स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदि संयोज्यचार्कविधिनासंयोज्यौतौततः परं १६ देशकालौतुसंकीर्त्याः
सुकगोत्रादिनामतः व्रतंवैसर्गिकंकुर्वेमृतस्यब्रह्मचारिणः १७ हेम्नाभ्युदयिकंकृत्वाप्रतिष्ठाप्यचपावकं आघारांतंच
संपाद्यचतुर्व्याहृतिभिर्हुनेत् १८ व्रतपत्यग्नयेचैवव्रतानुष्ठानसफलं संपादनायविश्वेभ्योदेवेभ्यश्चहुनेद्धृतं १९ ततः
स्विष्टकृतंहुत्वाहोमशेषंसमापयेत् देशकालौपुनःस्मृत्वाकरिष्येऽर्कविवाहकं २० हेम्नाभ्युदयिकंकृत्वाअर्कशाखांश
वंतथा लिप्त्वातैलहरिद्राभ्यांपीतसूत्रेणवेष्टयेत् २१ पीतवस्त्रयुगेनापिअग्निंसंस्थापयेत्ततः आघारांतेग्नयेचैवविः
वाहविधियोजकं २२ बृहस्पतयेकामायचतुर्व्याहृतिभिस्तथा आज्यंस्विष्टकृतंहुत्वाकर्मचैवसमापयेत् २३ अर्कशा
खांशवंचैवदाहयेच्चयथाविधि मृतस्याभ्रियमाणस्यषडब्दंव्रतमाचरेत् २४ त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनका
न्नवान् हस्तमात्राःकर्णमात्रा दद्यात्कृष्णाजिनानिच २५ पादुकाछत्रमाल्यानिगोपीचंदनमेवच मणिप्रवालमाल्यं

वधूभूषणानिसमर्पयेत् २६ एवंकृतेविधानेचविघ्नः कोपिनजायते ईश्वरउवाच एवंश्रुत्वाब्राह्मणेभ्योराजात्हृद्यवि
चारयत् २७ भातिमेः कविवाहोयमनुकल्पोनसुखव्यकः नददातिप्रसीतस्यकन्यांकश्चिद्वधूंयतः २८ अहंराजास्मिप्रद
देरत्नानिचधनंबहु ददामितस्मैयः कश्चिद्दास्यतेःस्यवधूंयदि २९ विप्रः कश्चित्पुरेतस्मिन्नासीद्देशांतरंगतः तस्यपूर्वंमृ
तायास्तुभार्यायाः कन्यकाशुभा ३० आसीद्द्वितीयाभार्यातुदुष्टचित्ताविचारयत् सपत्नीद्वेषतश्चापिबृहद्द्रव्यस्यलोभ
तः ३१ दशवर्षात्तुसाबालादीनामातृवशंगता सापत्नमातासालक्षंगृहीत्वाप्रददौसुतां ३२ कन्यांगृहीत्वाजग्मुस्तेश्मशानंसरि
तस्तटे विवाहंचक्रुतुश्चैवशवेनसहकन्यकां ३३ भोजयित्वाविधानेनदग्धुंसमुपचक्रमुः ततः साकन्यकापृच्छत्किमिदंक्रि
यतेजनाः ३४ ततस्तेदुःखिताः सर्वेप्रोचुर्मंदतयावधूम् ततः प्रोवाचसाभीतारुदतीबालभाषतः ३५ पतिर्मेकिंदत्यतेमेसोदः
ग्धुंनैवददाम्यहं गच्छध्वंसहिताः सर्वेतिष्ठाम्यत्राहमेकिका ३६ पत्यासहगमिष्यामिउत्तिष्ठतियदात्वसौ इत्युक्वातस्यास्तु
निर्बंधंकरुणादीनचेतसः ३७ प्रारब्धवादिनोवृद्धाः केचित्तत्रैवसूचिरे अहोकिंवाभाविकर्मज्ञायतेनैवकस्यचित् ३८ दी
नपालः कृपालुश्चभगवान्किंकरिष्यति निराश्रिताचकन्येयंमात्रासापत्नभावतः ३९ विक्रीतास्यादतोदेवः कदाचित्सालं

कोभवेत् अतोस्माभिरशक्येयंदग्धुंचायंतथाशवः ४० अतोस्माभिश्चगंतव्यंसर्वेषांरोचतेयदि संमंत्र्यैवंतुसर्वेपिगतास्तेन
गरंप्रति ४१ सैकाशिवंपार्वतींचस्मरंतीभयविह्वला अजानंतीबालभावात्किमेतदितिविह्वला ४२ तस्याःसंस्मरणाद्देव्याःस
र्वज्ञौपार्वतीशिवौ करुणापूर्णहृदयौतत्राजग्मतुरंजसा ४३ वृषारूढौतुतौदृष्ट्वादंपतीतेजसांनिधी ननामदंडवद्भूमौनजा
नंत्यपिदैवते ४४ आश्वासनंपरंलेभेआगतासंगतिस्त्विति उवाचचपतिःकिंमेजागृतोवैनजायते ४५ प्रसन्नौबालभावेन
दययाचपरिप्लुतौ ऊचतुस्तेजनन्यास्तुव्रतंसूपोदनाभिधं ४६ व्रतंसंकल्प्यसातिलंगृहीत्वास्यप्रयच्छमे ब्रूहियन्मज्जनन्या
स्तिव्रतंसूपोदनाभिधं ४७ कृतंतस्यप्रभावेणउत्तिष्ठतुपतिर्मम तयाकृतंतथासर्वंशिवदत्तस्तथोत्थितः ४८ उपदिश्यव्र
तंतस्यास्तदांतर्दधतुःशिवौ शिवदत्तस्तुपप्रच्छकात्वंकेहागतोस्म्यहं ४९ साचाहकिंचिद्वृत्तांतंरात्रिश्चापिगताभवत् प्रा
तर्नदीतीरगताजनाराज्ञेन्यवेदयन् ५० राजन्पुत्रःस्नुषाचैवनदीतीरेवतिष्ठतः प्रामाणिकेभ्यःश्रुत्वासोहर्षंलोकोत्तरंययौ
५१ हर्षभेरीवादयन्सनदीतीरेसमाययौ जनाश्चसुदिताःसर्वेप्रशशंसुर्जनाधिपं ५२ राजन्मृतःकालगृहात्पुत्रस्तेपुनरा
गतः प्रशशंसस्नुषांराजाकिमहंशस्यतेजनैः ५३ दूरदृष्टोधमश्चाहंधन्येयंसुभगास्नुषा एनत्पुण्यप्रभावेनपुत्रोयंजीवि

तोभम ५४ एवंस्नुषासुसंभाव्यराजाब्राह्मणसत्तमान् पूजयामाससुभगेर्दानमानपुरःसरम् ५५ बहिर्नीतमभीतस्यपुनर्ग्रा· मप्रवेशने विधिंब्राह्मणसंदिष्टंशांतिकंविधिनाचरत् ५६ एतत्तेकथितंवत्सव्रतंसूपोदनाभिधं पंचवर्षाणिकृत्वैतत्पश्चादुद्या पनंचरेत् ५७ प्रतिमांपार्वतीशस्यअर्चयेत्प्रतिवासरे प्रातर्होमंप्रकुर्वीतचरुणाम्रदलैस्तथा ५८ नैवेद्यंवायनंचैवव्रतोक्त· विधिनाचरेत् पुत्रंचिरायुषंलब्ध्वाअंतेशिवपुरंव्रजेत् ५९ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमा हात्म्येसूपौदनषष्ठीव्रतकथनंनामपंचदशोऽध्यायः १५ ईश्वरउवाच इतःपरंप्रवक्ष्यामिशीतलासप्तमीव्रतं श्राव· णेशुक्लपक्षेतुसप्तम्यामाचरेद्व्रतम् १ कुड्येलिखित्वावापींतुतथासलिलदेवताः सप्तसंख्यादिव्यरूपाअशरीरिणसंज्ञकाः २ बालद्वयसुतानारीपुरुषत्रयसंज्ञिता अश्वश्चवृषभश्चैवशिबिकानरवाहना ३ पूजावादेवतानांस्यात्षोडशैरुपचारकैः द ध्योदनस्यनैवेद्यंसाधनेकर्कटीफलं ४ द्विजायवायनंदद्यान्नैवेद्यस्यपदार्थकैः सप्तवर्षाणिकृत्वेवंसुवासिन्यश्चसप्तवै ५ प्रत्यब्दंभोजनीयाः स्युःपश्चादुद्यापनंचरेत् वादेवतानांप्रतिमाएकस्मिन्स्वर्णपात्रके ६ बालेनसहिताःपूज्याःसायंपूर्वेन्हि भक्तितः प्रातर्होमंचचरुणाग्रहहोमपुरःसरं ७ व्रतमेतत्पुराचीर्णंफलितंचतथाशृणु सौराष्ट्रदेशेनगरमासीच्छोभन

संज्ञितं तत्रासीद्धनिकःकश्चित्सर्वधर्मपरायणः सवापींखानयामासनिर्जलेविजनेवने ९ पादमार्गेशुभारम्यांबहुद्रव्यव्यये
नसः पशूनांजलपानाय अपियोग्यांददाम्यहं १० बद्धांचिरस्थायिनींचबहिःप्रांतेद्रुमैर्युतं आरामंकारयामासश्रांतपांथ
सुखायच ११ परंशुष्कंजलंतत्रनलब्धंबिंदुमात्रकं प्रयासोमेवृथाजातोद्रव्यंचव्ययितंवृथा १२ इतिचिंतापरश्चासीद्धनि॰
कोधनदाभिधः रात्रौतत्रैवसुष्वापस्वप्नेतंजलदेवताः १३ आगत्यकथयामासुः शृणुपायंजलागमे दास्यसेयदितेपौत्रंब
लिमस्माकमादृतः १४ तदेववापिकेयंतेजलपूर्णाभविष्यति हृष्टश्चैवंगृहमागत्यपुत्रायाकथयद्धनी १५ द्रविणोनामतत्पुत्रःसो
पिधर्मपरायणः शृणुष्वममवत्सस्य भवान्मज्जनकोयतः तत्राप्येतद्धर्मकार्येकिंविचार्यमिहत्वया स्थावरश्चास्तिधर्मोयं
नश्वरंचसुतादिकं १७ अल्पमौल्यंमहावस्तुलाभोयंदुर्लभः क्रयः शीतांशुश्चैवचंडांशुर्वर्ततेतनयोमम १८ शीतांशुर्ना
मज्येष्ठोयंबलिर्देयोविचारतः मंत्रोयंसर्वथास्माभिर्ज्ञातव्योनैवशोपितः १९ उपायस्तत्रमत्पत्नीगर्भिणीवर्ततेऽधुना आ
सन्नप्रसवाचैवगंत्र्यसौस्वपितुर्गृहे २० प्रसूत्यर्थंकनिष्ठोसौतयासहगमिष्यति तदाकार्यमिदंतातनिर्विघ्नेनभविष्यति
२१ इतिश्रुत्वापुत्रवाक्यंपितातंसंतुतोषह धन्योसिपुत्रधन्योहंत्वयापुत्रेणपुत्रवान् २२ एतस्मिन्नंतरेतस्याःसुशीला

याः पितुर्गृहात् आकारणंसमगमत्तदासाच जगामह २३ ज्येष्ठोस्माकंसमीपेस्तु कनिष्ठोनीयतांत्वया स्नातथैवसतीच
क्रे भर्तृश्वशुरवाक्यतः २४ तदातौपुत्रपितरौतैलेनाभ्यज्यबालकं स्नापयित्वासुवस्त्रैश्च भूषणैः समलंकृतं २५ पूर्वाषाढा
वारुणार्क्षेस्थापयामासतुर्मुदा वाप्यांवार्देवतास्तुष्टाभवंत्विति समूचतुः २६ तदेववापी पूर्णाभूत्सुधातुल्येनवारिणा उभौ
गृहंजग्मतुस्तौ हर्षशोकसमन्वितौ २७ सासुशीलापितुर्गेहे सूतपुत्रंतृतीयकं मासत्रयोत्तरंगेहंनिजंगंतुंचनिर्गता २८ वा
पीसमीपंप्राप्तासौवापीपूर्णांददर्शह विस्मयंपरमंप्रापतत्रस्नानंचकारह २९ श्वशुरस्यप्रयासोमेसार्थकश्चधनव्ययः त
द्दिनेसप्तमीचासीच्छ्रावणेशुक्लपक्षके ३० सुशीलायाव्रतंचासीच्छीतलासंज्ञितंशुभं स्नातत्रपाकमकरोदोदनंचानयद्दधि
३१ वार्देवताश्चसंपूज्यदध्यन्नकर्कटीफलं नैवेद्यंकल्पयामासदत्वाविप्रायवायनं ३२ स्वयंतदेवबुभुजेसहितासहवासि-
भिः ततोयोजनमात्रंतुतस्याग्रामोबभूवह ३३ ततः सानिर्गताचासीदारुह्यशिबिकांशुभां बालकद्वयसंयुक्तातदास्ताज
लदेवताः ३५ ऊचुः परस्परंचास्याः पुत्रोदेयोयतोनया अस्माकंव्रतमाचीर्णंप्रज्ञाचविहितापरा ३५ एतद्व्रतप्रभावेणनूत
नोदीयतेसुतः पूर्वजातोयदिग्रास्योत्यस्मत्तोषस्यकिंफलं ३६ विसर्जयामासुरितिउक्त्वान्योन्यंदयालवः मातरंदर्शयामा

सुर्वाप्यांनिष्काश्यबाह्यतः ३७ अधावत्पृष्ठतोमातुर्मातरित्याह्वयन्शिशुः संश्रुत्यपुत्रशब्दंसापरावृत्यावलोकयत् ३८ दृ
ष्ट्वासानंदनंस्वीयंचकितासाभवद्धृदि स्थाप्यांकेसूर्ध्न्यवघ्रायकिंचित्सप्रच्छनोसुतं ३९ बिभेष्यतीतिबुध्वासात्हृदयेत्वन्व
चिंतयत् तस्करैर्यदिवानीतस्तर्ह्यलंकारवान्कथं ४० पिशाचैर्यदिवानीतोमोक्षितश्चपुनःकथम् चिंतासमुद्रेमग्नाः
स्युर्गृहसंबंधिनोजनाः ४१ इत्येवंचिंतयंतीसानगरद्वारमापसा जनाःसंकथयामासुःसुशीलासुसमागता ४२ श्रु
त्वातुपितृपुत्रौतौपरांचिंतामवापतुः किंवदिष्यतिचास्माकमस्माभिर्वाकिमुच्यतां ४३ एतस्मिन्नंतरेप्रासापुत्रत्रयस
मन्विता ज्येष्ठंदृष्ट्वातुतंबालंश्वशुरश्चपतिश्चसः ४४ आश्चर्यंपरमंप्रापपरांमुदमवापच त्वयाकिंपुण्यमाचीर्णंव्रतंवा
पिशुचिस्मिते ४५ पतिव्रतासिधन्यासिपुण्यवत्यसिभामिनि मासद्वयंतुसंजातमकस्मान्नास्त्यभूच्छिशुः ४६ सचत्व
यापुनर्लब्धोवापीपूर्णापिचाभवत् एकपुत्रागतेतस्त्वमागतासित्रयान्विता ४७ त्वयोध्धृतंकुलंसुभ्रुकिंत्वांस्तौमिशुभा
नने श्वशुरेणस्तुतैवंसापत्याप्रेम्णाचवीक्षिता ४८ श्वश्र्वाचानंदितोवाचपुण्यमार्यस्यसर्वशः प्रापुःसर्वेपिचानंदंभुक्त्वा
भोगान्यथेप्सितान् ४९ इत्येतत्कथितंवत्सशीतलासप्तमीव्रतं दध्योदनंशीतलंचशीतलंकर्कटीफलं ५० वापीजलं

शीतलंतुशीतलाश्चापिदेवताः तापत्रयस्यसंतापाच्छीतलाव्रतिनस्ततः ५१ अतोहेतोःसप्तमीयंशीतलेतियथार्थिका ५२
इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येशीतलासप्तमीव्रतकथनंनामषोडशोध्यायः १६ ई
श्वरउवाच अथवक्ष्यामिदेवेशपवित्रारोपणंशुभं सप्तम्यामधिवास्याथअष्टम्यामर्पयेत्तुतत् १ पवित्रंकारयेद्यस्तुत
स्यपुण्यफलंशृणु सर्वयज्ञव्रतंदानंसर्वतीर्थाभिषेचनं २ प्राप्नुयान्नात्रसंदेहोयस्मात्सर्वगताशिवा नाधयोनचदुःखानि
नपीडाव्याधयोपिच ३ नभयंशत्रुजंतस्यनग्रहैःपीड्यतेक्वचित् सिद्ध्यंतिसर्वकार्याणिअल्पानिचमहंतिच ४ नातःप
रतरंवत्सअन्यत्पुण्यविवृद्धये नराणांचनृपाणांचस्त्रीणांचैवविशेषतः ५ सौभाग्यजननंतात तवस्नेहात्प्रकाशितं श्रा
वणेशुक्लसप्तम्यामधिवास्यविधानृज ६ सर्वोपस्करसंयुक्तोदेव्यांसद्भक्तिमान्श्वसः सर्वाणिपूजाद्रव्याणिगंधपुष्पफला
निच ७ नैवेद्यानिविचित्राणिवस्त्राद्याभरणानिच संपाद्यशोधयेदेतान्प्राशयेत्संचगव्यकं ८ चरुणादिग्बलिंदद्यात्क्रा
यंचैवाधिवासनं छादयेत्सदृशैर्वस्त्रैः पत्रैश्चैतत्पवित्रकं ९ देव्यास्तन्मूलमंत्रेणशतवाराभिमंत्रितं स्थापयेत्पुरतोदे
व्याः सर्वशोभासमन्वितं १० देव्यास्तुमंडपंकृत्वारात्रौजागरणंचरेत् नटनर्तकवेश्यानांकुशलान्विविधान्गाणान् ११

स्थापयेद्वाद्यगीतादीन्नृत्यविद्याविशारदान् प्रत्यूषेविधिवत्स्नात्वादिग्भ्योदद्यात्पुनर्बलीन् १२ देवींसंपूज्यविधिवत्स्त्रियोभो
ज्यास्तथाद्विजाः पवित्रमर्पयेद्देव्याआदावंतेचदक्षिणां १३ यथाशक्त्याभवेद्वत्सनियमःकार्यसाधकः स्त्रियोक्षामृगया
मांसंराज्ञावर्ज्यंप्रयत्नतः १४ स्वाध्यायश्चद्विजाचार्यैर्नकार्यंकर्षणंकृषेः वणिग्भिर्नचवाणिज्यंसप्तपंचदिनानिवा १५ अ
थवात्रीणिचैकंवादिनंतस्यार्धमेववा देव्याव्यापारआसक्तिःकर्तव्यासततंहृदि १६ नकरोतिविधानेनपवित्रारोपणं
बुधः तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम १७ तस्माद्भक्तिसमायुक्तैर्नरैर्देवीपरायणैः वर्षेवर्षेप्रकर्तव्यंपवित्रा
रोपणंशुभं १८ कर्कटकगतेसूर्येतथासिंहगतेपिवा अष्टम्यांशुक्लपक्षस्यदद्याद्देव्याःपवित्रकं १९ एतस्याकरणेदो
षोनित्यमेतत्प्रकीर्तितं २० सनत्कुमारउवाच देवदेवमहादेवपवित्रंयत्त्वयोदितं निर्मितव्यंकथंस्वामि
स्तद्विधिंवदसर्वशः २१ ईश्वरउवाच हेमताम्रक्षौमरूप्यैःसूत्रैःकौशेयपट्टजैः कुशैःकाशैश्चकार्पासैर्ब्रा
ह्मण्यावर्तितैःशुभैः २२ कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यसाधयेत् ततोत्तमंपवित्रंतुषष्ट्यासहशतैस्त्रिभिः २३
सप्तत्यासहितंद्वाभ्यांशताभ्यांमध्यमंस्मृतं साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् २४ उत्तमंतुशतग्रंथिपंचाश

ङ्ग्रंथिमध्यमं पवित्रकंकनिष्ठंस्यात्सडग्रंथिभिश्चभोजनं अथवांगगुणैर्वेदद्वाभ्यांद्वादशतोपिवा चतुर्विंशद्वादशाष्टग्रंथि·
भिर्वापवित्रकं २५ अथचाष्टोत्तरशतंचतुःपंचाशद्देवताः सप्तविंशतिरेवैवंज्येष्ठमध्यकनीयसम् २६ अधमंनाभिमात्रं
स्यादूरुमात्रंतुमध्यमं उत्तमंजानुमात्रंतत्प्रतिमायांनिगद्यते २७ रंज्याः सर्वाः कुंकुमेनपवित्रग्रंथयः शुभाः देवींपूज्यपु
रोभागेसर्वतोमंडलेशुभे २८ कलशेवेणुपटलेपवित्राणिनिधापयेत् त्रिसूत्र्यांब्रह्मविष्ण्वीशानावाह्यचततःशृणु २९ न
वसूत्र्यांतथोंकारंसोमंवन्हिंविधिंतथा नागांश्चंद्ररवीशांश्चविश्वेदेवांश्चस्थापयेत् ३० अतः परंप्रवक्ष्यामिस्थाप्याग्रंथि
षुदेवताः क्रियाचपौरुषीवीराविजयाचापराजिता ३१ मनोन्मनीजयाभद्रामुक्तिरीशातथैवच प्रणवादिनमोंतैश्चना
मभिर्ग्रंथिसंख्यया ३२ आवर्त्यमानैरावाह्यपूजयेच्चंदनादिभिः धूपितंप्रणवेनाभिमंत्र्यदेव्यैसमर्पयेत् ३३ एतत्तेकथि·
तंदेव्याःपवित्रारोपणंशुभं अन्येषांचैवदेवानांप्रतिपत्प्रभृतिष्वपि ३४ पवित्रारोपणंकार्यंदेवतास्तावदामिते धनदःश्री
स्तथागौरीगणेशःसोमराट्गुरुः ३५ भास्करश्चंडिकांबाचवासुकिश्चतथर्षयः चक्रपाणिस्त्वनंतश्चशिवःकःपित
रस्तथा ३६ प्रतिपत्प्रभृतिष्वेताःपूज्यास्तिथिषुदेवताः मुख्यायादेवतायास्तुपवित्रारोपणंत्विदं ३७ तदंगदेवता

यास्तुत्रिसूत्रंस्यात्सवित्रकं ३८ ईश्वरउवाच अतःपरंप्रवक्ष्यामिकर्तव्यंनवमीदिने श्रावणेमासिविप्रेंद्रपक्षयोरु
भयोरपि ३९ कुमारीनामिकादुर्गापूजनीयायथाविधि कुर्यान्नक्तव्रतंतत्रक्षीरमाक्षिकभोजनं ४० उपवासपरोवा
स्यान्नवम्यांपक्षयोर्द्वयोः कुमारीचेतिनाम्नावैचंडिकामर्चयेत्सदा ४१ कृत्वारौप्यमयींभक्त्यादुर्गांवैपापनाशिनीम्
करवीरस्यपुष्पैस्तुगंधैरगरुचंदनैः ४२ धूपेनचदशांगेनमोदकैश्चापिपूजयेत् कुमारींभोजयेत्तस्मात्त्रियोविप्रांश्चश
क्तितः भुंजीतवाग्यतःपश्चाद्बिल्वपत्रकृताशनः एवंयःपूजयेद्दुर्गांश्रद्धयापरयायुतः सयातिपरमंस्थानंयत्रदेवो
गुरुःस्थितः एतत्तेनवमीकृत्यंकथितंविधिनंदन ४५ सर्वपापप्रशमनंसर्वसंपत्करंनृणां पुत्रपौत्रादिजननमंते
सद्गतिदायकं ४६ इतिश्रीस्कंदपुराणेसनत्कुमारेश्वरसंवादेश्रावणमासमाहात्म्येष्टम्यांदेवीपवित्रारोपणं
नामसप्तदशोऽध्यायः १७ सनत्कुमारउवाच भगवन्पार्वतीनाथभक्तानुग्रहकारक कथयस्वदयासिंधो
माहात्म्यंदशमीतिथेः १ ईश्वरउवाच श्रावणेशुक्लपक्षेतुदशम्यांप्रारभेद्व्रतम् प्रतिमासेदशम्यांतुशुक्लायांव्र
तमाचरेत् २ एवंद्वादशमासेषुकृत्वाव्रतमनुत्तमम् नभःशुक्लदशम्यांतुततउद्यापनंचरेत् ३ राज्याशयाराजपुत्रः

कृष्यर्थंचकृषीवलः वाणिज्यार्थंवणिक्सुतः पुत्रार्थंगुर्विणीतथा ४ धर्मार्थकामसिद्ध्यर्थंलोकः कन्यावरार्थिनी यष्टुका
मोद्विजवरोरोग्यारोग्यार्थमेवच ५ चिरप्रवासितेकांतेपत्नीतस्यागमायच एतेष्वन्येषुकर्तव्यमाशाव्रतमिदंतदा ६ य
स्माद्यस्यभवेदार्तिः कार्यंतेनतदाव्रतम् नभः शुक्लदशम्यांतुस्नात्वासंपूज्यदेवतां ७ नक्तमाशासुपूज्यावैपुष्पपल्लवचंद
नैः गृहांगणेलेखयित्वायवपिष्टान्तकेनवा ८ स्त्रीरूपाश्चाधिदेवस्यशस्त्रवाहनचिन्हिताः दत्वाघृताक्तनैवेद्यंपृथग्दीपां
श्चदापयेत् ९ फलानिकालजातानिततः कार्यंनिवेदयेत् आशाः स्वाशाः सदासंतुसिद्ध्यंतुमेमनोरथाः १० भवतीनांप्र
सादेनसदाकल्याणमस्त्विति एवंसंपूज्यविधिवद्दत्वाविप्रायदक्षिणाम् ११ अनेनक्रमयोगेनमासिमासिसदाचरेत्
वर्षमेकंमुनिश्रेष्ठततउद्यापनंचरेत् १२ सौवर्णीः कारयेदाशारोप्याः पिष्टातकेनवा ज्ञातिबंधुजनैः सार्धंस्नातः सम्यग
लंकृतः १३ पूजयेद्भक्तियुक्तेनचेतसादशदेवताः स्थापयेत्क्रमयोगेनमंत्रैरेभिर्गृहांगणे १४ त्वयिसन्निहितः शक्रः
सुरासुरनमस्कृतः स्वामीचभुवनस्यास्यऐंद्रीदिग्देवतेनमः १५ अग्नेः परिग्रहादाशेत्वमाग्नेयीतिपठ्यते तेजोरूपा
पराशक्तिरतस्त्वंवरदाभव १६ धर्मराजः समाश्रित्यलोकान्संयमयत्यसौ तेनसंयमिनीचासियाम्येसत्कामदाभव १७

श्रा॰मा॰
३१

खड्गहस्तातिविक्रांतानिर्ऋतिस्थानमाश्रिता तेननिर्ऋतिरूपासित्वमाशांपूरयस्वमे १८ त्वय्यास्तेभुवनाधारोवरुणोया
दसांपतिः कार्यार्थंममधर्मार्थंवारुणिप्रवणाभव १९ अधिष्ठितासियस्मात्त्वंवायुनाजगदादिना वायव्येत्वमतःशां॰
तिंनित्यंयच्छममालये २० धनाधिपाधितिष्ठासिप्रख्यातात्वमिहोत्तरा निरुत्तराभवाःस्मासुदत्त्वासद्योमनोरथम् २१
ऐशानिजगदीशेनशंभुनात्वमलंकृता पूरयस्वशुभेदेविवांछितानिनमोनमः २२ सर्वलोकोपरिगतासर्वदात्वंशिव॰
प्रदा सनकाद्यैःपरिवृतामांत्राहित्राहिसर्वदा २३ नक्षत्राणिचसर्वाणिग्रहास्तारागणास्तथा नक्षत्रमातरोयाश्चभूतप्रे
तविनायकाः २४ पूजितास्तुमयाभक्त्याभक्तिप्रवणचेतसा सर्वेममेष्टसिध्यर्थंभवंतुप्रवणाःसदा २५ भुजंगनकुले
नत्वंसेवितासियतोह्यधः नागांगनाभिःसहितातुष्टाभवममाद्यवै २६ एभिर्मंत्रैःसमभ्यर्च्यपुष्पधूपादिनाततः अलं
कारांश्चवासांसिफलानिचनिवेदयेत् २७ ततोवाद्यादिनादेनगीतनृत्यादिमंगलैः नृत्यतीभिर्वरस्त्रीभिर्जागरेणनिशां
नयेत् २८ कुंकुमाक्षततांबूलदानमानादिभिःसुखम् अतिवाह्यचतांरात्रिंहर्षयुक्तेनचेतसा २९ प्रभातेप्रतिमाम
र्च्यब्राह्मणायनिवेदयेत् अनेनविधिनाकृत्वाक्षमाप्यप्रणिपत्यच ३० भुंजीतमित्रैःसहितःसुहृद्बंधुजनेनच एवं

अ॰
१८

३१

यः कुरुतेतात दशमीव्रतमादरात् ३१ सर्वान्कामानवाप्नोतिमनसोभिमतान्नरः स्त्रीभिर्विशेषतः कार्यंव्रतमेतत्सना
तनम् ३२ प्राणिवर्गेयतोनार्यः श्रद्धाकामपरायणाः धन्यंयशस्यमायुष्यंसर्वकामफलप्रदं ३३ कथितंचमुनिश्रेष्ठमया
व्रतमिदंतव नानेनसदृशंचान्यद्व्रतमस्तिजगत्त्रये ३४ येमानवाविधिजपुंगवकामकामाः संपूजयंतिदशमीषुसदाद
शाशाः तेषामशेषनिहितान्हृदयेतिकामानाशाफलंतिकिमिहास्तिबहूदितेन ३५ मोक्षप्रदानेनायासोनात्रकार्याविः
चारणा व्रतंचानेनसदृशंनभूतंनभविष्यति ३६ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्ये
आशादशमीव्रतकथनंनामाऽष्टादशोऽध्यायः १८ ईश्वरउवाच अथवक्ष्येनभोमासिपक्षयोरुभयोरपि एः
कादश्यांतुयत्कृत्यंतच्छृणुष्वमहामुने १ नकस्यचिन्मयाख्यातंगुह्यमेतदनुत्तमं महापुण्यप्रदंवत्समहापातकना
शनम् २ वांछितार्थप्रदंनृणांश्रुतंपापापहारकं श्रेष्ठंव्रतानांसर्वेषांशुभमेकादशीव्रतं ३ तत्तेऽहंसंप्रवक्ष्यामिसमा
हितमनाः शृणु दशम्यामुषसिस्नात्वाकृतसंध्यादिकः शुचिः ४ आप्याज्ञांवेदविदुषः पुराणज्ञाञ्जितेंद्रियान् संपूः
ज्यदेवदेवेशंषोडशैरुपचारकैः ५ एकादश्यांनिराहारः स्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्यु

त ६ कुर्याच्चनियमंवत्सरंगुरुदेवाग्निसंनिधौ तद्दिनेभूमिशायीस्यात्कामक्रोधविवर्जितः ७ ततःप्रभातेविमलेकेशा
वार्पितमानसः श्रीधरेतितदावाक्यंक्षुतप्रस्खलनादिषु ८ पाखंडादिभिरालापंदर्शनंश्च वर्णंतथा त्यजेद्दिनत्रयंव
त्सव्रतंकैवल्यकारकं ९ ततोमध्याह्नसमयेनद्यादौविमलेजले स्नानंकुर्याज्जितक्रोधः पंचगव्यपुरःसरम् १० आ
दित्यायनमस्कृत्यश्रीधरंशरणंव्रजेत् स्ववर्णाचारविधिनाकृतकृत्योगृहंव्रजेत् ११ पूजयेच्छ्रीधरंतत्रश्रद्धाभक्तिपुरः
सरम् पुष्पधूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि १२ गीतवाद्यैःकथाभिश्चजागरंकारयेन्निशि कुंभंसंस्थापयित्वातुरत्न
गर्भंसकांचनं छादितंवस्त्रयुग्मेनसितचंदनचर्चितम् प्रतिमांदेवदेवस्यशंखचक्रगदाभृताम् १४ कृत्वायथावत्संपू
ज्यप्रभातेविमलेसति द्वादश्यांकृतकृत्यस्तुश्रीधरेतिजपेद्बुधः १५ पूजयेद्देवदेवेशंशंखचक्रगदाधरम् विप्रायदद्यात्क
लशंहेमदक्षिणयान्वितम् १६ विशेषान्नवनीतंतुतत्रदेयंद्विजातये श्रीधरःप्रीयतांमेद्यश्रियंपुष्णात्वनुत्तमाम् १७
इत्युच्चार्यमुनिश्रेष्ठसमभ्यर्च्यजगद्गुरुं संभोज्यविप्रमुख्यांश्चदद्याच्छक्त्याचदक्षिणां १८ भृत्यादीन्भोजयित्वातु·
यवसंगोषुदापयेत् स्वयंभुंजीतचततःसुहृद्बंधुसमन्वितः १९ सनत्कुमारकथितस्तेशुक्लैकादशीविधिः एवमेव

नभोमासिकृष्णायामपिसाधयेत् २० अनुष्ठानंतुल्यमेवदेवनाम्निपरंभिदा जनार्दनःप्रीयतांमेवाक्यमेतदुदीरयेत् २१
शुक्लायांश्रीधरोदेवः कृष्णायांतुजनार्दनः एतत्तेसम्यगाख्यातसुभगेयैकादशीव्रतम् २२ नानेनसदृशंपुण्यंनभूतंनभवि
ष्यति इदंत्वयागोपनीयंनदेयंदुष्टमानसे २३ ईश्वरउवाच अथवक्ष्यामिद्वादश्यांपवित्रारोपणंहरेः उक्तःप्रायोवि-
धिर्देव्याःपवित्रारोपणेतव २४ विशेषोयश्चतंवक्ष्येसावधानमनाःशृणु अत्राधिकारीसंदिष्टस्तंशृणुष्वमहामुने २५ब्राह्म-
णःक्षत्रियोवैश्यस्तथास्त्रीशूद्रएवच स्वधर्मावस्थिताःसर्वेभक्त्याकुर्युःपवित्रकं २६ अतोदेवेतिमंत्रेणद्विजोविष्णोर्निवे
दयेत् स्त्रीशूद्राणांनाममंत्रोयेनसंपूजयेद्धरिं २७ रुद्रायेतिमंत्रेणद्विजःशंभोर्निवेदयेत् स्त्रीशूद्राणांनाममंत्रोये
नसंपूजयेद्धरम् २८ कृतेमणिमयंकार्यंत्रेतायांहेमसंभवं पट्टजंद्वापरेसूत्रंकार्पासंतुकलौस्मृतं २९ यतिभिर्मानसंकार्यं
पवित्रारोपणंशुभं कृतानिचपवित्राणिवैणवेपट्टलेशुभे ३० संस्थाप्यशुचिवस्त्रेणापिधाय्यपुरतोन्यसेत् क्रियालोपवि
धानार्थंयत्त्वयापिहितंप्रभो ३१ मयैतत्क्रियतेदेवतवतुष्ट्यैपवित्रकं नमेविघ्नंभवेद्देवकुरुनाथदयांमयि ३२ सर्वथासर्व-
दादेवममत्वंपरमागतिः एतत्पवित्रतोहंत्वांतोषयामिजगत्पते ३३ कामक्रोधादयोप्येतेनमेस्युर्व्रतघातकाः अद्यप्र-

भृतिदेवेशयावत्स्याद्वार्षिकंदिनं ३४ तावद्रक्षात्वयाकार्यात्वद्भक्तस्यनमोस्तुते देवंसंप्रार्थ्यकलशेपात्रेवेणुमयेशुभे ३५ सं
स्थितस्यपवित्रस्यकुर्यात्प्रार्थनमादृतः संवत्सरकृतार्चायापवित्रीकरणायभो ३६ विष्णुलोकात्पवित्राद्यआगच्छेहनः
मोस्तुते विष्णुतेजोद्भवंरम्यंसर्वपापप्रणाशनम् ३७ सर्वकामप्रदंदेवतवांगेधारयाम्यहम् आमंत्रितोसिदेवेशपुराण
पुरुषोत्तम ३८ अतस्त्वांपूजयिष्यामिसान्निध्यंकुरुतेनमः निवेदयाम्यहंतुभ्यंप्रातरेतत्पवित्रकं ३८ ततःपुष्पांजलिं
दत्वारात्रौजागरणंचरेत् एकादश्यामधिवसेद्द्वादश्यामर्चयेद्बुधः ४० गंधदूर्वाक्षतैर्युक्तंसमादायपवित्रकं देवदेवन
मस्तुभ्यंगृहाणेदंपवित्रकं ४१ पवित्रीकरणार्थायवर्षपूजाफलप्रदं पवित्रंमांकुरुष्वाद्ययन्मयादुष्कृतंकृतं ४२ शुद्धो
भवाम्यहंदेवत्वत्प्रसादात्सुरेश्वर मूलसंपुटितेरेतैर्मंत्रैर्दद्यात्पवित्रकं ४३ महानैवेद्यकंदत्वानीराज्यप्रार्थयेत्ततः मू
लमंत्रेणजुहुयाद्होमंसघृतपायसं ४४ विसर्जयित्वामंत्रेणअनेनैवपवित्रकं सांवत्सरींशुभांपूजांसंपाद्यविधिवन्मम
व्रजेदानींपवित्रंत्वंविष्णुलोकंविसर्जितं उत्तार्यब्राह्मणेदद्यात्तोयेवाथविसर्जयेत् ४० एतत्तेकथितंवत्सपवित्रारोपणं
हरेः इहलोकेसुखंभुक्त्वाअंतेवैकुंठमाप्नुयात् ४८ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहा॰

त्स्येउभयैकादशीव्रतकथनंद्वादश्यांविष्णुपवित्रारोपणंनामैकोनविंशोऽध्यायः १९ ईश्वरउवाच त्रयोदशीदिने
कृत्यंकथयामितवाग्रतः अत्रानंगःपूजनीयः षोडशैरुपचारकैः १ रक्ताक्षतैःपीतगंधैर्द्रव्यैःसौगंधिकैःशुभैः पुष्टि
कांजनकैर्द्रव्यैरेतोवृद्धिकरैःपरैः २ नैवेद्यमर्पयेच्चैवतांबूलंसुखरोचकम् तांबूलेयोजयेद्द्रव्यंचिक्कणंक्रमुकंशुभं खा
दिरंचूर्णकंजातित्वचंजातिफलंतथा लवंगैलानारिकेलंबीजस्यशकलंलघु ४ स्वर्णरूप्याणिपत्राणिकर्पूरंकेसरंतथा ·
जातानिमगधेदेशेनागवल्लीदलानिच ५ श्वेतवर्णानिपक्कानिजीर्णानिचदृढानिच रसयुक्तानिदेयानिप्रीतयेशंबरद्वि
षः ६ माक्षिकमलसारेणानिर्मिताभिश्चवर्तिभिः नीराजयेच्चित्तभवंपुष्पांजलिमथार्पयेत् ७ प्रार्थयेन्नामभिस्तस्य·
तानितेकथयाम्यहं सर्वोपमानसौंदर्यःप्रद्युम्नाख्योहरेःसुतः ८ मीनकेतनकंदर्पकानंगोमन्मथस्तथा मारःकामा
त्मसंभूतोझषकेतुर्मनोभवः ९ रतिपीनघनोत्तुंगस्तनयोःपत्रवल्लिका यस्यवक्षसिकस्तूर्याःशोभितेपरिरंभिता १०
पुष्पधन्वन्शंबरारेकुसुमेषोरतेःपते मकरध्वजपंचेषोमदनस्मरसुंदर ११ देवानांकार्यसिद्ध्यर्थंशिवाक्षिप्तहुताशन
परोपकारसीमानंध्वनयंस्तेनकर्मणा १२ निमित्तमात्रंविजयेवसंतस्यसहायता त्वंमनोरंजनेशक्तस्त्रिषुस्यैवदिवानि

शि १३ स्वपदभ्रंशनेयस्मात्तपस्विभ्योबिभेतिसः त्वदन्यः शंभुनाकोन्योविरुध्येदृढमानसः १४ परब्रह्मानंदसमानंद
दस्त्वहृतेः त्वकः महामोहस्यसैन्येषुत्वा दृशः कोऽस्तिवीर्यवान् १५ अनिरुद्धपतिः कृष्णात्मजोयश्वसुरप्रभुः मलयाच
लसंभूतचंदनागुरुवासितः १६ दक्षिणादिङ्मातरिश्वासहायस्तेजगज्जये शरत्सुधांशुसन्मित्र जगत्सर्जनकारण
१७ नाथत्वदस्त्रंपरममोघमतिदूरगं मर्मच्छिदामकरुणंरहितंप्रतिकारतः १८ सुकुमारंस्मृतमपिनिःसीमक्षो·
भकारणं स्वतुल्यस्यपदार्थस्यदर्शनादपिसाधकं १९ प्रवृत्तिमुख्यालंकारः सहायेनजगज्जये सर्वश्रेष्ठातयादेवउपह्य
स्याः कृताविभो २० ब्रह्माकन्यालंपटोभूद्दासक्तोहरिःस्मृतः परदारकलंकेनअस्पृष्टव्यः शिवोयतः २१ स्वशक्त्यामेव
निरतोबहुकालंव्यवायवान् दुष्कर्मनिरतश्चेंद्रोगौतमादिवधूंप्रति २२ द्विजराजोगुरोर्भार्याबलादेवापहारवान् विश्वामि
त्रस्तपोभ्रष्टः केनाकारिचभूयसः २३ उक्ताः प्राधान्यतस्त्वेतेकिंबहूक्तेनमानद विरलाः संतिलोकेऽस्मिन्ब्राह्मणावशव
र्तिनः २४ तस्मात्प्रसीदभगवन्कृतयापूजयाऽनया पूजितः श्रावणेशुक्लत्रयोदश्यांमनोभवः २५ प्रवृत्तिलंपटस्यातिवी
र्यपुष्टिंददास्यलम् निवृत्तिमार्गनिरतोस्वविकारंहरत्यपि २६ सकामस्यस्त्रियोरम्याः पीनोत्तुंगपयोधराः शरत्पूर्णसु

धारश्मिवदनाः कमलेक्षणाः २७ लंबातिनीलकुरलस्निग्धकेश्यः सुनासिकाः रंभोरूर्वागुप्तगुल्फागतिनिर्जितकुंज
राः २८ कामागारजिताश्वत्थपलाशा अतिशोभनाः बृहच्छ्रोण्यः कंबुकंठ्यो बृहज्जघनशोभिताः २९ बिंबोष्ठाः सिद्धक
न्यश्च नानालंकारभूषिताः मनोरमा ददात्येष संतुष्टः श्रावणे चर्या ३० शुक्लपक्षे त्रयोदश्यां ददाति च सुतान्बहून् चिरा
युषो गुणाढ्यांश्च सुस्वरूपान्सुसंततीन् ३१ कर्तव्यं यत्त्रयोदश्यामेतत्ते कथितं शुभं अतः परं चतुर्दश्यां कर्तव्यं शृणु मान
द ३२ अष्टम्यां कथितं देव्याः पवित्रारोपणं तव तत्र चेन्न कृतं तर्हि चतुर्दश्यां तु कारयेत् ३३ पवित्रं तु त्रिनेत्रस्य चतुर्दश्यां
समर्पयेत् पवित्रसाधनं सर्वं देवीविष्णुपवित्रवत् ३४ ऊहः परं प्रकर्तव्यः प्रार्थनादिषु नामसु शैवागमे मया प्रोक्तं जा
बालादिषु यत्परं ३५ विकल्पा कश्चिदस्तीह विशेषस्तं वदामि ते एकादशाथवा सूत्रैस्त्रिंशताष्टयुक्तया ३६ पंचाशता
वा कर्तव्यं तुल्यग्रंथ्यंतरालकं द्वादशांगुलमानानि तथा चाष्टांगुलानि वा ३७ लिंगविस्तारमानानि चतुरंगुलिकानि वा
अर्पयेच्छिवतुष्ट्यर्थं विधिः पूर्वोक्त एव हि ३८ फलादि पूर्वमेवोक्तमंते कैलासमाप्नुयात् एतत्ते कथितं वत्स किमन्यच्छ्रो
तुमिच्छसि ३९ इति श्रीस्कंदपुराणे ईश्वरसनत्कुमारसंवादे श्रावणमासमाहात्म्ये त्रयोदशीचतुर्दशीकर्तव्यकथनं

नामविंशोऽध्यायः २० सनत्कुमारउवाच पौर्णमास्याविधिंब्रूहि कृपांकृत्वादयानिधे माहात्म्यंशृण्वतांस्वामिन्श्रव
णेच्छाप्रवर्धते १ ईश्वरउवाच उत्सर्जनमुपाकर्मअध्यायानांभवेदिह पौषपूर्णामाघपूर्णाअथवोत्सर्जनेतिथिः २
पौषस्यप्रतिपद्वापिमाघमासस्यवाभवेत् ऋक्षंवारोहिणीसंज्ञमुत्सर्जनकृतोभवेत् ३ अथवान्येषुकालेषुस्वस्वशाखानु
सारतः सहप्रयोगोयुक्तःस्यादुत्सर्गप्रकृतिद्वये ४ अतोनभःपौर्णमास्यामुत्सर्जनमिहेष्यते उपाकर्मणिचैवस्याच्छ्र
वणर्क्षंतुबह्वृचां ५ चतुर्दश्यांपौर्णमास्यांप्रतिपद्दिवसेऽपिवा यत्रवाश्रवणर्क्षंस्याद्दृक्चानांतुतद्दिने ६ यजुषांपौर्ण
मास्यांस्यात्सामगानांतुहस्तभे शुक्रगुर्वोरस्तमयेउपाकर्मचरेत्सुखं ७ आरंभःप्रथमोनस्यादितिशास्त्रविदांमतं
ग्रहसंक्रांतिदुष्टेतुकालेकालांतरेभवेत् ८ पंचम्यांहस्तयुक्तायांपूर्णायांवानभस्यके स्वस्वगृह्यानुसारेणउत्सर्जनमु
पाकृतिः ९ मलमासेतुसंप्राप्तेशुद्धमासितुसाभवेत् नित्यंकर्मद्वयंचेदंप्रत्यब्दंनियमाच्चरेत् १० उपाकर्मसमाप्तौ
तुसंस्थितेषुद्विजातिषु अर्पणीयःसदादीपोयोषिद्भिस्तत्रसंसदि ११ आचार्यःप्रतिगृह्णातिददेद्वान्यद्विजातये सौ
वर्णेराजतेवापिपात्रेताम्रमयेऽपिवा १२ प्रस्थमात्रंतुगोधूमादीपंतसिष्टसंभवं दीपपात्रंसंविधायज्वालयेत्तत्रदीपकं

आज्येनवाथतैलेनवर्तित्रयसमन्वितं सदक्षिणंसतांबूलंब्राह्मणायनिवेदयेत् १४ दीपंसंपूज्यविप्रंचमंत्रमेतमुदीरयेत्
सदक्षिणः सतांबूलः सभादीपोयमुत्तमः १५ अर्पितोदेवदेवस्यममसंतुमनोरथाः सभादीपप्रदानेनपुत्रपौत्रादिकंकुलं
१६ सर्वंत्युज्ज्वलतांयातिवर्धतेयंशसासह स्वरंगनाभिःसदृशंरूपंजन्मांतरेलभेत् १७ सौभाग्यंचैवलभतेभर्तुःप्रियत
राभवेत् एवंकृत्वापंचवर्षंततउद्यापनंचरेत् १८ विप्रायदक्षिणांदद्याद्यथाशक्तिचभक्तितः सभादीपस्यमाहात्म्यमेतत्ते
कथितंशुभं १९ श्रवणाकर्मसंस्थाचतस्यामेवनिशिस्मृता तदुत्तरंसर्पबलिस्तत्रैवचविधीयते २० इदंसंस्थाद्वयंकुर्यात्
स्वस्वगृह्यमवेक्ष्यच हयग्रीवस्यावतारस्तस्यामेवतिथौमतः २१ हयग्रीवजयंत्यास्तुअतोत्रैवमहोत्सवः उपासनावतां
तस्यनित्यस्तुपरिकीर्तितः २२ श्रावण्यांश्रवणेपूर्वंजातोहयशिराहरिः जगामसामवेदंतुसर्वकिल्बिषनाशनम् २३ सिं
धूनदीवितस्तायांप्रवृत्तस्तत्रसंगमे श्रवणर्क्षेततस्तत्रस्नानंसर्वार्थसिद्धिदं २४ तत्रसंपूजयेद्विष्णुंशार्ङ्गचक्रगदाधरं ·
श्रौतव्यान्यथसामानिपूज्याविप्राश्चसर्वथा २५ क्रीडितव्यंचभोक्तव्यंतत्रैवस्वजनैःसह जलक्रीडाचकर्तव्यानारीभि
र्भर्तृलब्धये २६ स्वस्वदेशेस्वस्वगृहेअपिकुर्यान्महोत्सवं पूजयेच्चहयग्रीवंजपेन्मंत्रंचतंशृणु २७ प्रणवादिर्नमःशब्द

स्ततोभगवते इति धर्मायाथचतुर्थ्यंतंयोज्यचात्मविशोधनं २८ पुनरंतेनमः शब्दोमंत्रश्चाष्टादशाक्षरः सर्वसिद्धिकर
श्चायंषट्प्रयोगैकसाधकः २९ पुरश्चरणमेतस्यअक्षराणांतुसंख्यया लक्षंवाथसहस्रंवाकलौतुस्याच्चतुर्गुणं ३० एवं
कृतेहयग्रीवस्तुष्टः सत्कामदोभवेत् एतस्यामेवपूर्णायांरक्षाबंधनमिष्यते ३१ सर्वरोगोपशमनंसर्वाशुभविनाशनं शृ
णुत्वंमुनिशार्दूल इतिहासंपुरातनं ३२ इंद्राण्यायत्कृतंपूर्वमिंद्रस्यजयसिद्धये देवासुरमभूद्युद्धंपुराद्वादशवार्षिकं ३३
शक्रंदृष्ट्वातदाश्रांतंदेवीप्राहसुरेश्वरं अद्यभूतदिनंदेवप्रातःसर्वंभविष्यति ३४ अहंरक्षांविधास्यामितेनाजेयोभवि·
ष्यसि इत्युक्त्वापौर्णमास्यांसापौलोमीकृतमंगला ३५ बबंधदक्षिणेपाणौरक्षांमोदप्रदांततः बद्धरक्षस्ततःशक्रःकृत·
स्वस्त्ययनोद्विजैः ३६ दुद्रावदानवानीकंक्षणाज्जित्येप्रतापवान् वासवोविजयीभूत्वापुनरेवजगत्त्रये ३७ एषप्रभा·
वोरक्षायाः कथितस्तेमुनीश्वर जयदःसुखदश्चैवपुत्रारोग्यधनप्रदः ३८ सनत्कुमारउवाच क्रियतेकेनविधिनार·
क्षाबंधःसुरोत्तम कस्यांतिथौकदादेवएतन्मेवक्तुमर्हसि ३९ यथायथाहिभगवान्विचित्राणिप्रभाषते तथातथान
मेतृप्तिर्बह्वर्थाःशृण्वतःकथाः ४० ईश्वरउवाच संप्राप्तेश्रावणेमासिपौर्णमास्यांदिनोदये स्नानंकुर्वीतमतिमा

नश्रुतिस्मृतिविधानतः ४१ संध्याजपादिसंपाद्यपितृन्देवानृषींस्तथा तर्पयित्वाततः कुर्यात्स्वर्णपात्रविनिर्मितां हेम
सूत्रैश्चसंबद्धांमौक्तिकादिविभूषितां कौशेयतंतुभिःकीर्णौर्विचित्रैर्मलवर्जितैः ४३ विचित्रग्रंथिसंयुक्तांपदगुच्छैश्चरा
जितां सिद्धार्थैश्चाक्षतैश्चैवगर्भितांसुमनोहरां ४४ संस्थाप्यकलशंतत्रपूर्णपात्रेतुतांन्यसेत् उपविश्यासनेरम्येसुहृद्भिः
परिवारितः ४५ वेश्यानर्तनगानादिकृतकौतुकमंगलः ततः पुरोधसाकार्योरक्षाबंधःसमंत्रकः ४६ येनबद्धोबलीराजा
दानवेंद्रोमहाबलः तेनत्वामनुबध्नामिरक्षेमाचलमाचल ४७ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवान्यमानवैः रक्षाबंधः
प्रकर्तव्योद्विजान्संपूज्ययत्नतः ४८ अनेनविधिनायस्तुरक्षाबंधनमाचरेत् ससर्वदोषरहितः सुखीसंवत्सरंभवेत्
४९ यः श्रावणेविमलमासिविधानविज्ञोरक्षाविधानमिदमाचरतेमनुष्यः आस्तेसुखेनपरमेणसवर्षमेकंपुत्रप्रपौत्रस
हितःससुहृज्जनश्च ५० भद्रायांनकर्तव्योरक्षाबंधःशुचिव्रतैः बद्धारक्षातुभद्रायांविपरीतफलप्रदा ५० इति
श्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेश्रावणमासमाहात्म्येउपाकर्मोत्सर्जनश्रवणाकर्मसर्पबलिसभादीपहयग्री
वजयंतिरक्षाबंधविधिकथनंनामैकविंशोऽध्यायः २१ ईश्वरउवाच श्रावणेबहुलेपक्षेचतुर्थ्यांमुनिसत्तम

व्रतंसंकष्टहरणंसर्वकामफलप्रदम् १ सनत्कुमारउवाच क्रियतेकेनविधिनाकिंकार्यंकिंचपूजनं उद्यापनंकदा
कार्यंतन्मेवदसुविस्तरं २ ईश्वरउवाच चतुर्थ्यांप्रातरुत्थायदंतधावनपूर्वकं ग्राह्यंव्रतमिदंपुण्यंसंकष्टहरणंशु
भं ३ निराहारोस्मिदेवेशयावच्चंद्रोदयोभवेत् भोक्ष्यामिपूजयित्वात्वांसंकष्टात्तारयस्वमां ४ एवंसंकल्प्यवैधात्रस्नात्वा
कृष्णतिलैः शुभैः विधायचाह्निकंसर्वंपश्चात्पूज्योगणाधिपः ५ त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः यथाशक्त्याथ॰
वाहेमींप्रतिमांकारयेद्बुधः ६ हेमाभावेतुरूप्यस्यताम्रस्यापियथासुखं सर्वथातुदरिद्रेणकर्तव्यामृन्मयीशुभा ७ वित्त
शाठ्यंनकर्तव्यंकृतेकार्यंविनश्यति रम्येऽष्टदलपद्मेतुकुंभंवस्त्रयुतंन्यसेत् ८ जलपूर्णंतत्रपूर्णपात्रेदेवंप्रपूजयेत् षो
डशैरुपचारैस्तुमंत्रैर्वैदिकतांत्रिकैः ९ मोदकान्कारयेद्दिव्यान्तिलयुक्तान्दशोत्तमान् देवाग्रेस्थापयेत्पंचपंचविप्रायदा
पयेत् १० पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणांतुयथाशक्त्यादत्वाचप्रार्थयेत्ततः ११ विप्रवर्यनमस्तुभ्यं
मोदकांस्तेददाम्यहं सफलान्पंचसंख्याकान्देवदाक्षिणयायुतान् १२ आपदुद्धरणार्थायगृहाणद्विजसत्तम अबद्ध
मतिरिक्तंवाद्रव्यहीनंमयाकृतम् १३ तत्सर्वंपूर्णतांयातुविप्ररूपगणेश्वर ब्राह्मणान्भोजयेच्चैवस्वादन्नेनयथासुखं

चंद्रायार्घ्यंप्रदातव्यंशृणुतन्मंत्रमाहृतः क्षीरसागरसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंगणेशप्रीतिवर्द्धन १५
एवंकृतेविधानेनप्रसन्नस्याद्गणाधिपः ददातिवांछितान्कामांस्तस्मात्तद्व्रतमाचरेत् १६ विद्यार्थीलभतेविद्यांधनार्थीलि
भतेधनं पुत्रार्थीपुत्रमाप्नोतिरोगीरोगाद्विमुच्यते १७ आपत्सुवर्तमानानांनृणांव्याकुलचेतसां चिंतयाग्रस्तमनसां
वियोगोसुहृदांतथा १८ सर्वसंकष्टहरणंसर्वाभीष्टफलप्रदं पुत्रपौत्रादिजननंसर्वसंपत्करंनृणां १९ पूजनेचजपेचै
वमंत्रंतेकथयाम्यहं तारोत्तरंनमःशब्दंहेरंबंमदमोदितम् २० चतुर्थ्यंतंप्रशस्तंचसंकष्टस्यनिवारणं स्वाहांतंचव
देन्मंत्रमेकविंशतिवर्णकं २१ इंद्रादिलोकपालांश्चसमंतादर्चयेत्सुधीः मोदकानांप्रकारंच अन्यंतेकथयाम्यहं २२ प
क्वसुद्गतिलैर्युक्ता मोदकाघृतपाचिताः अर्पणीयागणेशायनारिकेलेनगर्भिताः २३ ततोदूर्वांकुरांगृह्यन्नेभिर्नामपदैः
पृथक् पूजयेद्गणनाथंच तानिनामानिमेशृणु २४ गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेति तथामू
षकवाहन २५ विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक विघ्नराजस्कंदगुरोसर्वसंकष्टनाशन ३६ लंबोदरगणाध्यक्षगौ
र्यंगमलसंभव धूम्रकेतोभालचंद्रसिंधुरासुरमर्दन विद्यानिधानविकटशूर्पकर्णेतिचैवहि पूजयेद्गणपंचैतैरेकविं

शतिनामभिः २९ प्रार्थयेच्चततोदेवंभक्तिनम्नः प्रसन्नधीः विघ्नराजनमस्तेस्तुउमापुत्राघनाशन ३० यदुद्देश्यकृतंमेद्य
यथाशक्त्याप्रपूजनं तेनतुष्टोममाद्याशुहृत्स्थान्कामान्प्रपूरय ३१ विघ्नान्नाशयमेसर्वान्विविधोपस्थितान्प्रभो त्वत्प्र
सादेनकार्याणिसर्वाणीहकरोम्यहं ३२ शत्रूणांबुद्धिनाशंचमित्राणामुदयंकुरु ततोहोमंप्रकुर्वीतशतमष्टोत्तरंतथा
३३ मोदकैर्वायनंदद्याद्व्रतसंपूर्णहेतवे लड्डुकैर्मोदकैर्वापिसप्तभिःफलसंयुतं ३४ गणेशप्रीणनार्थाय ब्राह्मणाय
ददाम्यहं कथांश्रुत्वाततः पुण्यांदद्यादर्घ्यंप्रयत्नतः ३५ चंद्रायपंचवारंतुमंत्रेणानेनसत्तम ३६ क्षीरोदार्णवसंभूत
अत्रिगोत्रसमुद्भव गृहाणार्घ्यंमयादत्तंरोहिण्यासहितः शशिन् ३७ ततः क्षमापयेद्देवंशक्त्याविप्रांश्चभोजयेत् स्व
यंभुंजीततच्छेषंयदेवब्राह्मणार्पितं ३८ सप्तग्रासान्मौनयुक्तोप्यशक्तस्तुयथासुखं इत्थंकुर्यात्त्रिमासेषुचतुर्ष्वपि
विधानतः ३९ उद्यापनंपंचमेचकुर्याद्धीमान्प्रयत्नतः सौवर्णंवक्रतुंडंचशक्त्याकुर्याद्विचक्षणः ४० पूर्वोक्तेनविधा
नेनपूजयेद्भक्तिमान्नरः चंदनेनसुगंधेनपुष्पैर्नानाविधैःशुभैः ४१ नारिकेलफलेनैवदद्यादर्घ्यंसमाहितः दद्याद्भ
क्तायविप्रायवायनंफलसंयुतं ४२ शूर्पपायससंयुक्तंरक्तवस्त्रेणवेष्टितम् सौवर्णंगणपंतस्मैदद्याच्चैवसदक्षिणं

४३ तिलानामाढकंदद्याद्व्रतसंपूर्णहेतवे ततः क्षमापयेद्देवंविघ्नेशः प्रीयतामिति ४४ इत्थमुद्यापनंकृत्वा हयमेधफलं
लभेत् सर्वकार्याणिसिध्यंतिमनोभिलषितान्यपि ४६ पुराकल्पेगतेस्कंदेपार्वत्यावैकृतंकिल चतुर्थ्यपिचमासेषुमम
वाक्येनसत्तम पंचमेमासिहृष्टस्तु कार्तिकेयोत्व्यपर्णया समुद्रपानवेलायांत्व्यगस्त्येनपुराकृतं ४७ त्रिषुमासेषुवि-
घ्नेशप्रसादात्सिद्धिमापसः षण्मासावधिविप्रेंद्रदमयंत्याकृतंत्विदं ४८ नलमन्वेषयंत्याचततोदृष्टोनलोभवत् नीते
निरुद्धेबाणस्यनगरंचित्रलेखया ४९ क्वगतः केननीतोसावित्यभूद्व्याकुलः स्मरः प्रद्युम्नंपुत्रशोकार्तंप्रीत्यारुक्मिण्य
भाषत ५० शृणुपुत्रप्रवक्ष्यामियद्वृत्तंमामकेगृहे राक्षसेनपुरानीतेबालकेत्वयिखंडिते ५१ त्वद्वियोगजदुःखेनत्वद
यंममदारितं कदाद्रक्ष्याम्यहंपुत्रसुखमत्यंतसुंदरं ५२ अन्यस्त्रीणांसुतान्दृष्ट्वाममचेतोविदीर्यते ममपुत्रोभवेन्ना
सौवयसामेनमानतः ५३ इतिचिंताकुलायामेगतान्यब्दानिभूरिशः ततोमेदैवयोगेनलोमशोमुनिरागतः ५४ तेनो
पदिष्टंविधिवत्सर्वचिंताहरंव्रतं संकटाख्यचतुर्थ्यास्तु चतुर्वारंमयाकृतं ५५ तत्प्रसादात्त्वमायातोहत्वाशंबरमाहवे
ज्ञात्वाप्रकुरुपुत्रत्वंततोज्ञास्यसिनंदनम् ५६ प्रद्युम्नेनकृतंविप्रगणनाथस्यतोषणं श्रुतोबाणासुरपुरेनिरुद्धोनारद

ततः ५७ गत्वाबाणासुरपुरंयुद्धंकृत्वासुदारुणं कृशानुरेत्तसासार्धंजित्वाबाणासुरंरणे ५८ आनीतःस्नुषयासार्धमनिरुद्ध
स्तदामुने अन्यैर्देवासुरैः पूर्वंकृतंविघ्नेशतुष्टये ५९ अनेनसदृशंलोकेसर्वसिद्धिकरंव्रतं तपोदानंचतीर्थंचविद्यतेनात्रकुत्र
चित् ६० बहुनात्रकिमुक्तेननास्त्यन्यत्कार्यसिद्धये नोपदेश्यंत्वभक्तायनास्तिकायशठायच ६१ देयंपुत्रायशिष्यायश्रद्धा
युक्तायसाधवे ६२ ममप्रियोसिविप्रर्षेधर्मिष्ठविधिनंदन कार्यकर्तासिलोकानामुपदिष्टमतस्तव ६३ इतिश्रीस्कं
द॰ ईश्व॰ श्राव॰ चतुर्थीव्रतकथनंनामद्वाविंशोऽध्यायः २२ ईश्वरउ॰ कृष्णाष्टम्यांनभोमासिवृषेचंद्रेनिशी
थके देवक्यजीजनत्कृष्णंयोगेस्मिन्वसुदेवतः १ सिंहराशिगतेसूर्येकर्तव्यःसुमहोत्सवः सप्तम्यांलघुभुक्कुर्याद्दं
तधावनपूर्वकं २ उपवासस्यनियमंस्वपेद्ब्रह्मचारीजितेंद्रियः केवलेनोपवासेनकृष्णजन्मदिनंनयेत् ३ सप्तजन्मकृता
त्पापान्मुच्यतेनात्रसंशयः उपावृत्तस्तुपापेभ्योयस्तुवासोगुणैःसह ४ उपवासःसविज्ञेयःसर्वभोगविवर्जितः त
तोष्टम्यांतिलैःस्नात्वानद्यादौविमलेजले ५ सुदेशेशोभनंकुर्याद्देवक्याःसूतिकागृहं नानावर्णैःसुवासोभिःशो
भितंकलशैःफलैः ६ पुष्पैर्दीपावलीभिश्चचंदनागरुधूपितं हरिवंशस्यचरितंगोकुलंतत्रलेखयेत् ७ युक्तंवा॰

दित्रनिनदैर्नृत्यगीतादिमंगलैः षष्ठ्यादेव्याधिष्ठितांचतन्मध्येप्रतिमांहरेः ८ कांचनींराजतींताम्रींपैत्तलींमृन्मयींतुवा·
वार्क्षींमणिमयींवापिवर्णकैर्लिखितांयथा ९ सर्वलक्षणसंपन्नांपर्यंकेचाष्टशल्यके प्रसूतांदेवकींतत्रस्थापयेन्मंचको
परि १० सुप्तबालंतत्रहरिंपर्यंकेस्तनपायिनं यशोदांतत्रचैकस्मिन्प्रदेशेसूतिकागृहे ११ प्रसूतकन्यकांचैव कृष्णापा
र्श्वेतुसंलिखेत् कृतांजलिपुटान्देवान्यक्षविद्याधरामरान् १२ वसुदेवंचतत्रैवरवड्गचर्मधरंस्थितम् कश्यपोवसुदेवो
यमंदितिश्चैवदेवकी १३ शेषोबलोयशोदापिअदितिसंशाद्बभूवह नंदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः १४ गोप्यश्चा
प्सरसःसर्वागोपाश्चापिदिवौकसः कालनेमिश्चकंसोयंनियुक्तास्तेनदासुराः १५ गोधेनुकुंजराश्वाश्चदानवाःशस्त्र
पाणयः लेख्यनीयाश्चतत्रैवकालियोयमुनाह्रदे १६ इत्येवमादियत्किंचिच्चरितंहरिणाकृतं लेखयित्वाप्रयत्नेनपू
जयेद्भक्तितत्परः १७ उपचारैःषोडशभिर्देवकींचेतिमंत्रतः १८ गायद्भिःकिन्नराद्यैःसततपरिणतावेणुवीणानिनादै
र्भृंगार्यादर्शदूर्वादधिकलशकरैःकिन्नरैःसेव्यमानां पर्यंकेस्वासनस्थामुदिततरमुखीपुत्रिणीसम्यगास्तेसादेवीदिव्य
माताविजयतुसस्तुतादेवकीकांतयुक्ता १९ भगवादिनमोंतैश्च पृथङ्गामानुकीर्तनैः कुर्यात्पूजांविधिज्ञस्तुसर्वपापाप

नुत्तये २० देवक्यावसुदेवस्यवासुदेवस्यचैवहि बलदेवस्यनंदस्ययशोदायाः पृथक्पृथक् २२ चंद्रोदयेशशांकाय अर्घ्यंदद्याद्धरिं
स्मरन् क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव नमस्तेरोहिणीकांत अर्घ्यंनः प्रतिगृह्यतां २३ देवक्यावसुदेवंचनंदंचैवयशोद
या रोहिण्याचसुधारश्मिंबलंचहरिणासह २४ संपूज्यविधिवद्देही किंनाप्नोतिसुदुर्लभं एकादशीकोटिसंख्यातुल्याकृष्णाष्ट
मीतथा २५ एवंसंपूज्यतद्रात्रौप्रभातेनवमीदिने यथाहरेस्तथाकार्योभगवत्यामहोत्सवः २६ ब्राह्मणान्भोजयेद्भक्त्यादद्याद्गो
धनादिकं यद्यदिष्टतमंतत्रकृष्णोमेप्रीयतामिति २७ नमस्तेवासुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवंचास्तु इत्युक्त्वा
तंविसर्जयेत् २८ ततोबंधुजनैः सार्द्धंस्वयंभुंजीतवाग्यतः एवंयः कुरुतेदेव्याः कृष्णस्यचमहोत्सवं २९ प्रतिवर्षंविधानेनय
थोक्तंलभतेफलं पुत्रसंतानमारोग्यंसौभाग्यमतुलंलभेत् ३० इहधर्ममतिर्भूत्वा अंतेवैकुंठमाप्नुयात् उद्यापनमथोवक्ष्येयु
ण्येन्हिविधिपूर्वकं ३१ पूर्वेद्युरेकभक्ताशीस्वपेद्विष्णुंस्मरन्हृदि प्रातः संध्यादिसंपाद्यब्राह्मणैः स्वस्तिवाचयेत् ३२ आचार्यंव
रयित्वातुऋत्विजश्चैवपूजयेत् पलेनवातदर्धेनतदर्धार्धेनवापुनः ३३ प्रतिमांकारयेत्सश्चाद्वित्तशाठ्यविवर्जितः मंडपेमंड
लेदेवान्ब्रह्माद्यान्स्थापयेद्बुधः ३४ तत्रसंस्थापयेत्कुंभंताम्रंमृन्मयमेववा तस्योपरिन्यसेत्पात्रंराजतंवैणवंतुवा ३५ वास

साछाद्य गोविंदंतत्रसंपूजयेद्बुधः उपचारैः षोडशभिर्मंत्रैर्वैदिकतांत्रिकैः ३६ ततोऽर्घ्यंहरयेदद्याद्देवकीसहितायच शंखेद्ध
त्वाजलंशुद्धंसपुष्पफलचंदनं ३७ जानुभ्यामवनिंगत्वानारिकेलफलान्वितं जातःकंसवधार्थायभूभारोत्तारणायच कौरवाणां
विनाशायदैत्यानांनिधनायच गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे चंद्रायार्घ्यंततोदद्यात्पूर्वोक्तविधिनासुधीः ३९ नमस्तुभ्यं
जगन्नाथदेवकीतनयप्रभो वसुदेवात्मजानंतत्राहिमांभवसागरात् ४० इत्थंसंप्रार्थ्यदेवेशंरात्रौजागरणंचरेत् प्रत्यूषेविम
लेस्नात्वापूजयित्वाजनार्दनं ४१ पायसेनतिलाज्यैश्चमूलमंत्रेणभक्तितः अष्टोत्तरशतंहुत्वाततःपुरुषसूक्ततः ४२ मंत्रेणे
दंविष्णुरितिजुहुयाद्वैघृताहुतीः होमशेषंसमाप्याथपूर्णाहुतिपुरःसरं ४३ आचार्यंपूजयेत्तस्माद्भूषणाच्छादनादिभिः गा
मेकांकपिलांदद्याद्व्रतसंपूर्णहेतवे ४४ पयस्विनींसुशीलांचसवत्सांसगुणांतथा स्वर्णशृंगींरौप्यखुरांकांस्यदोहनिकायुतां ४५
मुक्तापुच्छांताम्रपृष्ठींस्वर्णघंटासमन्वितां वस्त्रच्छन्नांदक्षिणाढ्यामेवंसंपूर्णतामियात् ४६ कपिलायाअभावेपिगौरन्यापि
प्रदीयते ततःप्रदद्याद्दत्विग्भ्योदक्षिणांचयथार्हतः ४७ ब्राह्मणान्भोजयेत्तस्माद्दष्टौतेभ्यश्चदक्षिणां कलशाञ्जलसंपूर्णा
न्दद्याच्चैवसमाहितः ४८ प्राप्यानुज्ञांतथातेभ्योभुंजीतसहबंधुभिः एवंकृतेब्रह्मपुत्रव्रतोद्यापनकर्मणि ४९ निःपापस्तत्स

णादेवजायतेविबुधोत्तमः पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः भुक्त्वाभोगांश्चिरंकालमंतेवैकुंठमाप्नुयात् ५० इतिश्री
स्कंद॰ ईश्व॰ श्रा॰ कृष्णजन्माष्टमीव्रतकथनंनामत्रयोविंशतितमोऽध्यायः २३ ईश्वरउ॰ पुराकल्पेब्रह्मपुत्रदैत्यभार
प्रपीडिता ब्रह्माणंशरणंप्रापपृथ्वीदीनातिविह्वला १वृत्तांतंतन्मुखाच्छ्रुत्वाब्रह्मादेवगणैःसह क्षीरार्णवेहरिंगत्वातुष्टा
वस्तुतिभिर्बहु २प्रादुरासीत्ततोदिक्षुश्रुत्वासर्वैर्विधेर्मुखात् मोभिष्टदेवादेवक्याजठरेवसुदेवतः ३अवतीर्णोभविष्यामि
हरिष्येभूमिवेदनां भवंतुयादवादेवाइत्युक्त्वांतर्दधेविभुः ४ देवक्याजठरेजातोवसुदेवेनगोकुले स्थापितःकंसभीतेन
वद्धधेतत्रकंसहा ५आगत्यमथुरांपश्चात्कंसःसगणमाहनत् ततःसर्वेपौरजनाः प्रार्थयामासुरादरात् ६ कृष्णकृष्णमहायो
गिन्भक्तानामभयप्रद प्राणाश्चास्माहिनोदेवशरणागतवत्सल ७ किंचिद्विज्ञापयेद्देवएतन्नोवक्तुमर्हसि तवजन्मदिनेकृत्यं
नज्ञातंकेनचित्क्वचित् ८ ज्ञात्वाचतद्दिनेसर्वेकुर्मोवर्द्धापनोत्सवं तेषांहद्ध्वात्वतांभक्तिंस्वस्मिन्श्रद्धांचसौहृदं ९ कृत्यंजन्म
दिनेतेभ्यःकथयामासकेशवः श्रुत्वातेपितथाचक्रुर्विधिनातेनतद्व्रतं १० वरांश्चबहुधाप्रादान्भगवान्व्रतकारिणे अत्रैवो॰
दाहरंतीममितिहासंपुरातनं ११ अंगदेशोद्भवोराजाभितजिन्नामनामतः तस्यपुत्रोमहासेनः सत्यजित्सत्यथेस्थितः १२

पालयामाससर्वज्ञोविधिवद्रंजयन्प्रजाः तस्यैवंवर्तमानस्यकदाचिद्दैवयोगतः १३ पाखंडैःसहसंवासोबभूवबहुवासरं तत्संसर्गात्स
नृपतिरधर्मेनिरतोभवत् १४ वेदशास्त्रपुराणानिनिनिंदबहुशोनृपः वर्णाश्रमगतेधर्मेविद्वेषंपरमंगतः १५ एवंबहुतिथेकालेप्रया
तेमुनिसत्तम कालेननिधनंप्राप्तोयमदूतवशंगतः १६ बध्वापाशैर्नीयमानोयमदूतैर्यमांतिकं पीडितस्ताड्यमानोसौदुष्टसंगति
योगतः नरकेपातितःप्रापयातनाबहुवत्सरं भुक्त्वापापस्यशेषेणपैशाचींयोनिमास्थितः १८ क्षुधातृष्णासमाक्रांतोभ्रमन्सम
रुधन्वसु कस्यचित्त्वथवैश्यस्यदेहमाविश्यसंस्थितः सहतेनैवसंयातोमथुरांपुण्यदांपुरीं समीपेरक्षकैस्तस्यतस्माद्देहाद्बहिष्कृ
तः २० बभ्रामविपिनेसोथऋषीणामाश्रमेषुच कदाचिद्दैवयोगेनहरेर्जन्माष्टमीदिने २१ क्रियमाणांमहापूजांव्रतिभिर्मुनिभिर्द्वि
जैः रात्रौजागरणंचैवनामसंकीर्तनादिभिः २२ ददर्शसर्वंविधिवच्छुश्रावचहरेःकथां निष्पापस्तत्क्षणादेवशुद्धोनिर्मलमान
सः २३ प्रेतदेहंसमुत्सृज्य विष्णुलोकेविमानगः यमदूतैःपरित्यक्तोदिव्यभोगसमन्वितः २४ विष्णुसान्निध्यमापन्नोव्रतस्यास्य
प्रभावतः नित्यमेतद्व्रतंचैवपुराणेसार्वलौकिकं २५ कथ्यतेविधिवत्सम्यङ्मुनिभिस्तत्वदर्शिभिः सर्वकामिकमेवैतत्फलाकामा
नवाप्नुयात् २६ एवंयःकुरुतेकृष्णजन्माष्टम्यांव्रतंशुभं भुक्त्वेहविविधान्भोगान्शुभान्कामानवाप्नुयात् २७ तत्रदेवविमानेनवर्षे

लक्षंविधेःसुत भोगान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः २८ सर्वकामससमृद्धस्तुसर्वाशुभविवर्जितः कुलेनृपतिवर्याणांजायते
मदनोपमः २९ यस्मिन्सदैवविषयेलिखितंस्यात्सरार्पितं कृष्णजन्मोपकरणंसर्वशोभासमन्वितं ३० पूज्यतेविश्वसृट् तत्रव्रतेरुत्सव
संयुतैः परचक्रभयंतत्रनकदाचिद्भविष्यति ३१ पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंक्वचित् गृहेवापूजयेद्यस्तुचरितंदेवकीजनः ३२
तत्रसर्वंसमृद्धंस्यान्नोपसर्गाद्भयंभवेत् संसर्गेणापियोभक्त्याव्रतंपश्येदनाकुलः सोपिपापविनिर्मुक्तःप्रयातिहरिमंदिरं ३३ इ
तिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादेजन्माष्टमीव्रतकथनंनामचतुर्विंशोध्यायः २४ ईश्वरउ॰ अथवक्ष्येमुनिश्रेष्ठपिठो
रव्रतमुत्तमं अमायांश्रावणेमासिसर्वसंपत्प्रदायकं १ सर्वाधिष्ठानमेतद्यद्गृहंपीठंततोमतं आरस्तत्रसमूहःस्याद्वस्तुमात्रस्य
पूजने २ पिठोरमितिसंज्ञास्यव्रतस्यातोमुनीश्वर तत्प्रकारंचवक्ष्येहंसावधानमनाःशृणु ३ कुड्येविलिप्यतास्त्रेणकृष्णेनाथ
सितेनवा धातुनातत्रतास्त्रेतुपीतेनविलिखेत्सुधीः ४ शुक्लेनवाथकृष्णेनपूर्ववच्चैवसंलिखेत् सितपीतेनरक्तेनकृष्णेनहरिते
नवा ५ मध्येशिवंशिवायुक्तंलिंगंवामूर्तिमेववा विस्तीर्णंकुड्यमालिख्यसर्वसंसारमालिखेत् ६ चतुःशालासमायुक्तंपाका
गारंसुरालयं शय्यागृहंकोशसद्मतथातस्त्रीनिकेतनं ७ प्रासादाट्टालिकाशोभंशालवृक्षसमुद्भवं इष्टकाभिश्चपाषाणैश्चूर्णन

द्यैः सुशोभनं ८ द्वाराणि चविविचित्राणि वलभीर्वेष्टिकास्तथा अजागावोमहिष्यश्च अश्वाउष्ट्रामतंगजाः ९ गंत्रीरथप्रभृतयः
शकटानांप्रभेदकाः स्त्रियोबालाश्चवृद्धाश्च तरुण्यः पुरुषास्तथा १० पालक्यांदोलिकाचैवमंचकाबहुरूपकाः ११ हैमानि
रौप्याणिचताम्रकाणिसैसानिलोहानिचमृन्मयानि रंगप्रसूतानिचपैत्तलानिपात्राणिनानाविधकारकाणि १२ यावंतः कशिपू
पधादाउपबर्हणाजातयः मार्जाराः सारिकाश्चैवशुभाअन्येपिपक्षिणः १३ पुरुषाणामलंकाराः स्त्रीणांचैवाप्यनेकशः यानिचास्त
रणानीहतथाप्रावरणानिच १४ यज्ञपात्राणियावंतिस्तंभदंडौचमंथने रज्जुत्रयंचतन्द्देतुदुग्धंचनवनीतकं दधितक्रंतथाम·
स्तुआज्यंतैलंतिलांस्तथा १५ गोधूमशालितुवरीयवयावनालवार्तानलंकचणकामुसुराः कुलित्थाः मुद्गप्रियंगुतिलकोद्र
वकातसीतिश्यामाकमाषचवलाइतिधान्यवर्गः १६ हषदंचोपलंचुल्लिंतथासंमार्जनीमपि पुरुषाणांचवस्त्राणिनारीणांचैवस
र्वशः १७ वेणुजन्यंचशूर्पादितथातृणभवानिच उलूखलंचमुसलंयंत्रंदलयुगान्वितं १८ व्यंजनंचामरंछत्रमुपानसादुकाद्वयं
दास्योदास्याभृत्यपोष्याः पशुभक्ष्यंतृणादिकं १९ धनुर्बाणाशतघ्न्यश्चखड्गाः कुंताश्चशक्तयः चर्मपाशांकुशगदास्त्रिशूलंभिंदिपा
लकाः २० तोमरोमुद्गरश्चैवपरशुः पट्टिशस्तथा भृशुंडीपरिघश्चैवचक्रयंत्रादिकंचयत् २१ जलयंत्रंमषीपात्रंलेखनी

पुस्तकादिकं फलजातंसर्वमपिछुरिकाकर्तरीतथा २२ नानाविधानिपुष्पाणिबिल्वश्चतुलसीतथा दीपिकाश्चैवदीपाश्चतथात
त्साधनानिच २३ शाकंनानाविधंभक्ष्यंपक्वान्नानांचयाभिदाः लेख्यंतच्चैवसकलमनुक्तमपिचैवहि २४ कियल्लेख्यंजनेनात्रव
क्तव्यंवामयाकियत् एकैकस्यपदार्थस्यभेदाःशतसहस्रशः २५ उपचारैः षोडशभिः सर्वेषांपूजनंभवेत् नानाविधश्चगंधःस्यात्पु
ष्पधूपोपिचंदनं २६ ब्राह्मणान्भोजयेद्बालान्सुवासिन्यश्चपुष्कलान् प्रार्थयेच्चशिवंसांबंव्रतंसंपूर्णमस्त्विति २७ शिवसांबदयासिं
धोगिरीशशशिशेखर व्रतेनानेनसंतुष्टःप्रयच्छास्मान्मनोरथान् २८ एवंकृत्वापंचवर्षंततउद्यापनंचरेत् आज्येनबिल्वपत्रैश्चहो
मःस्याच्छिवमंत्रतः २९ ग्रहहोमःपुराकार्यः पूर्वेद्युरधिवासनं अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा ३० होमसंख्याभवेद्दत्वाआ
चार्यंपूजयेत्ततः भूयसींदक्षिणांदद्यात्स्वयंभोजनमाचरेत् ३१ इष्टबंधुजनैःसार्धंकुटुंबसहितोबुधः एवंकृतेविधानेनसर्वान्का
मानवाप्नुयात् यद्यदिष्टतमंलोकेतत्सर्वंलभतेनरः ३२ एतत्तेकथितंवत्सपिठोरव्रतमुत्तमं व्रतेनानेनसदृशंसर्वकामसमृद्धिदं
३३ शिवप्रीतिकरंचैवनभूतंनभविष्यति भित्तौयद्यल्लिखेद्वस्तुतत्तदाप्नोतिनिश्चितं ३४ इतिश्रीस्कं॰ ईश्व॰ श्रा॰ अमावास्या
यांपिठोराव्रतकथनंनामपंचविंशोऽध्यायः २५ ईश्वरउ॰ यत्कर्तव्यंनभोमासिअमावास्यादिनेभवेत् प्रसंगतश्चय॰

च्चान्यत्स्मृतंतदपितेब्रुवे १पुरानानाविधैर्दैत्यैर्महाबलपराक्रमैः जगद्विध्वंसकैर्दुष्टैर्देवतोच्छेदकारिभिः २ संग्रामाबहवोजाता
आरुह्यवृषभंशुभं महासत्वोमहावीर्योनकदाचिज्जहौचमां ३ अंधकासुरसुहेतुतेनछिन्नतनुः कृतः भिन्नत्वग्रुधिरस्रावी
प्राणमात्रावशेषितः ४ तथापिधैर्यमालंब्ययावद्धन्मिचतंखलं उवाहतावन्मांनंदीतस्यत्वज्ञातवाहनं ५ हत्वातमंधकंदैत्यंतुष्टो
हंनंदिनंतदा कर्मणातेप्रसन्नोस्मिवरंवरयसुव्रत ६ व्रणास्तेप्रशमंयांतुनिरोगोबलवान्भव पूर्वस्मादपितेवीर्यंरूपंचापिविवर्ध
तां ७ यंयंवरंयाचसेत्वंतंतंदास्याम्यसंशयं ८ नंदिकेश्वरउ० ममास्तियाचनीयंनोदेवदेवोमहेश्वरः ममोपरिप्रसन्नोसि
किंवैभवमतःपरं ९ तथापिभगवन्याचेलोकोपकृतयेशिव अद्यासाश्रावणस्यास्तियस्यांतुष्टोभवान्मम १० एतस्यांवृषभाः पू
ज्यागोभिर्युक्ताःसुसून्मयाः अद्यैवामादिनेजन्मकामधेनूपमंभवेत् ११अतोप्यस्यावरंदेहिभवत्वेषेप्सितप्रदा प्रत्यक्षवृषभा
गावःपूजनीयाश्चभक्तितः १२धातुभिर्गैरिकाद्यैश्चभूषणीयाःप्रयत्नतः श्रृंगेषुस्वर्णरौप्यादिपट्टिकाबंधशोभनं १३ कौशेयगुच्छा
न्महतःश्रृंगयोरपिबंधयेत् पृष्ठनानाविधैर्वर्णैश्चित्रितेनसुवाससा १४आच्छादयेद्गलेघंटांबध्नीयाद्रम्यशब्दिताम् दिनाष्टां
शेबहिर्नीत्वासायंग्रामंप्रवेशयेत् १५ पिण्यातकंचनैवेद्यंअन्ननानाविधंचयत् अर्पयेत्तस्यभवतुगोधनंवृद्धिगंसदा १६ गावोय

त्रगृहेनस्युःश्मशानसदृशंचतत् पंचामृतंपंचगव्यंनभवेद्गोरसंविना १७ संमार्जनंपूततमंगोमयेनविनानहि पिपीलिकादिजंतूनास्तु
पसर्गाश्चतत्रहि १८ प्रोक्षणंयत्रगोमूत्रान्नाभवतिसुरोत्तम भोजनस्थमहादेवकोरसोगोरसंविना १९ एतेन्येपिवरादेयाःप्रसन्नोसि
यदिप्रभो इतिनंदिवचःश्रुत्वातुष्टोहमधिकंतदा २० सर्वमस्तुवृषश्रेष्ठयथातेयाचितंतथा अन्यच्चशृणुभोनंदिन्नामास्यतुदिनस्य
यत् २१ नवाद्यतेयोवृषभःकेनचित्कर्मणिक्वचित् तृणमश्नन्पिबन्नीरंतूष्णींयोवर्धतेवृषः २२ महान्वीरश्चबलवान्पोलइत्युच्यतेहि
सः तन्नाम्नेदंदिनंनंदिन्पोलाइतिभविष्यति २३ तत्रोत्सवोमहान्कार्यइष्टबंधुजनैःसह इतिदत्तामयावत्सवराःश्रेष्ठाहितदिने ते
नश्रेष्ठंदिनंचैतत्पोलासंज्ञंमतंजनैः २४ अत्रोत्सवोमहान्कार्योवृषाणांसर्वकामदः अतःपरंप्रवक्ष्यामिअस्यामेवकुशाग्रहं २५
नभोमासस्यदर्शेतुशुचिर्दर्भान्समाहरेत् अयातयामास्तेदर्भाविनियोज्याःपुनःपुनः २६ कुशाःकाशायवादूर्वाउशीराश्चसकूंदकाः
गोधूमाव्रीहयोमौंज्यादशदर्भाःसबल्वजाः २७ विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज नुदपापानिसर्वाणिदर्भस्वस्तिकरोभव
२८ एवंसन्मंत्रमुच्चार्यततःपूर्वोत्तरामुखः हुंफट्कारेणमंत्रेणसकृच्छित्वासमुद्धरेत् २९ अच्छिन्नाग्राअशुष्काग्राःपैत्र्येतुहरिताः
स्मृताः अमूलादेवकार्येषुप्रयोज्याश्चजपादिषु ३० सप्तपत्राःकुशाःशस्तादेवेपित्र्येचकर्मणि अनंतगर्भिणोसाग्रोप्रादेशोचपवि

त्रके ३१ चतुर्भिर्दर्भपिंजूलैः पवित्रंब्राह्मणस्यतु एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमं ३२ सर्वेषांवाभवेद्वाभ्यांपवित्रंग्रंथिशोभितं इ
दंतुधारणार्थस्यात्पवित्रंकथितंतव ३३ दर्भद्वयंतुसर्वेषांभवेद्दुत्सवनायच पंचाशताभवेद्ब्रह्मातदर्धेनतुविष्टरः ३४ निष्काशनीयंनो
हस्तादाचमेतुपवित्रकं विकिरेन्नोकृतेचैवकृतेपाद्येतुसंत्यजेत् ३५ नास्तिदर्भसमंपुण्यंपवित्रंपापनाशनं दर्भाधीनानिकर्माणिदै
वपित्र्याणिसर्वशः ३६ तादृग्विधानांदर्भाणाममायांग्रहणंभवेत् अयातयामताचैवकिंवर्ण्याःमानभस्यतः ३७ इत्येतत्कथितं
कृत्यममायांश्रावणेतुयत् अन्यच्चश्रावणेकृत्यंतच्चापिकथयामिते ३८ इतिश्रीस्कंद० ईश्व० अमायांवृषभपूजनंकुशग्रहणंना
मषड्विंशतितमोऽध्यायः २६ ईश्वरउ० अथातःश्रावणेकर्कसिंहसंक्रांतिसंभवः प्राप्यतेतत्रयत्कृत्यंतच्चापिकथयामिते
१ सिंहकर्कटयोर्मध्येसर्वानद्योरजस्वलाः तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाः २ अगस्त्योदयपर्यंतंकेचिदूचुर्महर्षयः याव
न्नोदेतिभगवान्दक्षिणाशाविभूषणः ३ तावद्रजोवहानद्यअल्पतोयाःप्रकीर्तिताः याःशोषमुपगच्छंतिग्रीष्मेतुसरितोभुवि ४ ता
सुप्रावृषिनस्नायादपूर्णेदशवासरे धनुःसहस्राण्यष्टौचगतिर्यासांस्वतोनहि ५ नतानदीशब्दवाच्यागर्तास्तेपरिकीर्तिताः प्रारंभेक
र्कसंक्रांतेर्महानद्योरजस्वलाः ६ त्रिदिनंतुचतुर्थेन्हिशुद्धाःस्युर्योषितोयथा महानदीःप्रवक्ष्यामिशृणुष्वावहितोमुने ७ गोदाव

रीभीमरथीतुंगभद्राचवेणिका तापीपयोष्णीविंध्यस्यदक्षिणेषट्प्रकीर्तिताः ८ भागीरथीनर्मदाच यमुनाचसरस्वती विशोका
चवितस्ताचविंध्यस्योत्तरतोपिषट् ९ द्वादशैतामहानद्योदेवर्षिक्षेत्रसंभवाः महानद्योदेविकाचकावेरीवंजरातथा १० कृष्णा
रजस्वलाएताः कर्कटादावहर्नृप कर्कटादौरजोदुष्टागौतमीवासरत्रयं ११ चंद्रभागासतीसिंधुःशरयूर्नर्मदातथा गंगाचयमु
नाचैवपूक्षजालासरस्वती १२ रजसानाभिभूयंतेयेचान्येनदसंज्ञिताः शोणःसिंधुर्हिरण्यारव्यःकोकिलाहितघर्घराः १३ शत
द्रुश्चनदाःसप्तपावनाःपरिकीर्तिताः गंगाधर्मद्रवःपुण्यायमुनाचसरस्वती १४ अंतर्गतारजोदोषाःसर्वावस्थासुचामलाः अपा
मयंरजोदोषोनभवेत्तीरवासिनां १५ जलंरजोदुष्टमपिगंगातोयेनपावनं अजागावोमहिष्यश्चयोषितश्चप्रसूतिकाः १६ भूमेर्न
वोदकंचैवदशरात्रेणशुध्यति अभावेकूपवापीनामन्यासांचपयोमृतं १७ रजोदुष्टेपिवर्यासिग्रामभोगानदुष्यति अन्येनचोद्धते
नीरेरजोदोषोनविद्यते १८ उपाकर्मणिचोत्सर्गेप्रातःस्नानेविपत्सुच चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यते १९ अतःपरंप्रवक्ष्यामि
सिंहेगोप्रसवोयदि भानौसिंहगतेचैवयस्यगौःसंप्रसूयते २० मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः तत्रशांतिंप्रवक्ष्यामिये
नसंपाद्यतेसुखं २१ प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ततोहोमंप्रकुर्वीतघृताक्तैराजसर्षपैः आहुतीनांघृताक्ता

नांतिलानांजुहुयात्ततः सहस्रेणव्याहृतिभिरष्टसंख्याधिकेनच २३ सोपवासः प्रयत्नेनदद्याद्विप्रायदक्षिणां सिंहराशौ
गतेसूर्येगोप्रसूतिर्यदाभवेत् २४ तदानिष्टंभवेत्किंचित्तच्छांत्यैशांतिकंचरेत् अस्यवामेतिसूक्तेनतद्विष्णोरितिमंत्रतः
२५जुहुयाच्चतिलाज्येनशतमष्टोत्तराधिकं मृत्युंजयविधानेनजुहुयाच्चतथायुतं २६श्रीसूक्तेनततःस्नायाच्छांतिसूक्तेनवा
पुनः एवंकृतेविधानेननभयंजायतेक्वचित् २७ एवमेवनभोमासिसूयेतवडवादिने अत्रापिशांतिकंकार्यंतदादोषोविन
श्यति २८ कर्केसिंहेनभोदानमथवक्ष्येशुभप्रदं घृतधेनुप्रदानंचकर्कटस्थेदिवाकरे२९सस्वर्णछत्रदानंशस्तंसिंहेनिगद्यते
श्रावणेवस्त्रदानस्यकीर्तितंसुमहत्फलं ३०घृतंचघृतकुंभाश्चघृतधेनुःफलानिच श्रावणेश्रीधरप्रीत्यैदातव्यानिविपश्चिते
३१अन्यान्यपिचदानानिसंतोषायकृतानिच अक्षय्यफलदानिस्युरन्यमासेप्यएवहि ३२ द्वादशस्वपिमासेषुनास्तिमेनैतादृशः
प्रियः आगच्छतिनभोमासिप्रतीक्षांचकरोम्यहं ३३करिष्यतेव्रतंयोत्रसमेप्रियतरोभवेत् ब्राह्मणानांविधूराजासूर्यःप्रत्य
क्षदेवतं ३४समाक्षिणीतयोरत्रसंक्रांतीभवतोयतः कर्कसंज्ञासिंहसंज्ञामाहात्म्यंकिमतःपरं ३५प्रातःस्नानंमासमात्रम
त्रयःकुरुतेनरः द्वादशस्वपिमासेषुप्रातःस्नानफलंलभेत् ३६नकरोतिनभोमासिप्रातःस्नानंयदानरः द्वादशस्वपिमासेषु

कृतंनिष्फलतामियात् ३७ महादेवदयासिंधोश्रावणेमासिसंयुतः प्रातःस्नानंकरिष्यामिनिर्विघ्नंकुरुमेप्रभो ३८ स्नात्वाशि
वंसमभ्यर्च्यनभोमाहात्म्यसत्कथां शृणुयात्सत्यहंभक्त्याएवंमासंनयेत्सुधीः ३९ अन्यत्रमासःकृष्णादिरत्रशुक्लादिरिष्य
ते नभोमासकथायास्तुमाहात्म्यंकेनवर्ण्यतां ४० सप्तधापिचयावंध्यासापुत्रंलभतेशुभं विद्यार्थीलभतेविद्यांबलार्थी
लभतेबलं ४१ रोगीचारोग्यमाप्नोतिबद्धोमुच्येतबंधनात् धनंधनार्थीलभतेधर्मेचैवरतिर्भवेत् ४२ भार्यार्थीलभतेभा
र्यांकिंबहूक्तेनमानद यद्यत्कामयत्तेतत्तदाप्नोत्यत्रनसंशयः ४३ अंतेममपुरंप्राप्यमोदतेममसन्निधौ पूजयेद्वाच
कंसम्यग्वासोलंकरणादिभिः ४४ वाचकस्तोषितोयेन तेनाहंतोषितःशिवः श्रुत्वाश्रावणमाहात्म्यंवाचकंयेननपूज
येत् ४५ छिनत्तिरविजस्तस्यकर्णौसबधिरोभवेत् तस्माच्छक्त्याप्रकुर्वीतवाचकस्यसुपूजनं ४६ इदंश्रावणमाहात्म्यं
यःपठेच्छृणुयादपि श्रावयेद्वापिसद्भक्त्यातस्यपुण्यमनंतकं ४७ इतिश्रीस्कंदपुराणेईश्वरसनत्कुमारसंवादे॰
नदीरजोदोषसिंहगोप्रसवसिंहकर्कटश्रावणादानस्नानश्रावणस्तुतिवाचकपूजाकथनंनामसप्तविंशोध्यायः २७ ई
श्वरउ॰ अतःपरंप्रवक्ष्यामिअगस्त्यार्घ्यविधिपरं येनचीर्णेनवैधात्रसर्वान्कामानवाप्नुयात् १ कालस्तस्यचविज्ञेय

अगस्त्यस्योदयात्पूर्वं समरात्राद्भवेद्यावदुदयः समरात्रकं २ दद्यादर्घ्यं प्रत्यहं च तद्विधिं तेवदाम्यहं प्रातः शुक्लतिलैः स्नात्वा
शुक्लमाल्यांबरो गृही ३ स्थापयेदव्रणं कुंभं सुवर्णादिविनिर्मितं पंचरत्नसमायुक्तं घृतपात्रेण संयुतं ४ नानाभक्ष्यफलैर्युक्तं मा
ल्यवस्त्रविभूषितं ताम्रेण पूर्णपात्रेण उपरिस्थेन भूषितं ५ कुंभोद्भवस्य प्रतिमां तत्र पात्रे निधापयेत् अंगुष्ठमात्रं पुरुषं सौवर्णं
च चतुर्भुजं ६ पीनात्यायतदोर्दंडं दक्षिणाभिमुखं मुनिं सुशोभनं प्रशांतं च जटामंडलधारिणं ७ कमंडलुकरं शिष्यैर्बहुभिः
परिवारितं तथा दर्भाक्षतधरं लोपामुद्रासमन्वितं ८ आवाहयेत्पूजयेच्च गंधपुष्पादिभिस्तथा उपचारैः षोडशभिर्नैवेद्यैर्बहु
विस्तरैः ९ दध्योदनबलिं दद्याद्भक्तियुक्तेन चेतसा ततश्चार्घः प्रदातव्यस्तच्चैव विधिवच्छृणु १० सौवर्णे वाथ रौप्ये वा ताम्रे वेणुम
येऽथवा पात्रे नारिंगखर्जूरीनारिकेलफलानि च ११ कूष्मांडकारवल्लीनि कदलीदाडिमानि च वृंताकबीजपूराणि अक्षोटाः पिस्त
कास्तथा १२ नीलोत्पलानि पद्मानि कुशदूर्वांकुरास्तथा अन्यान्यपि च साध्यानि फलानि कुसुमानि च १३ नानाप्रकारभक्ष्याणि स
प्तधान्यानि चैव हि सप्तांकुराः पल्लवाश्च पंच वस्त्राणि चैव हि १४ एतान्पदार्थान्संस्थाप्य पात्रं सम्यक्प्रपूजयेत् जानुभ्यामवनिं ग
त्वा तत्पात्रं न्यस्य मूर्धनि १५ धृत्वा वा चित्सुखो भूत्वा ध्यायेत्कुंभोद्भवं मुनिं दद्यादर्घ्यं प्रयत्नेन श्रद्धाभक्तिपुरःसरं १६ काशपुष्पप्रती

काशवन्हिमारुतसंभव मित्रावरुणयोः पुत्रकुंभयोनेनमोस्तुते १७ विंध्यवृद्धिक्षयकरमेघतोयविषापह रत्नवल्लभदेवर्षे
लंकावासनमोस्तुते १८ आतापीभक्षितोयेनवातापीच्चमहाबलः लोपामुद्रापतिः श्रीमान्योसौतस्मैनमोनमः १९ येनोदि
तेनपापानिविलयंयांतिचाद्भयः व्याधयस्त्रिविधास्तापास्तस्मैनित्यंनमोनमः २० पादपूर्णसरिन्नाथोयेनवैशोषितःपुरा
सपुत्रायसशिष्यायसपत्नीकायवैनमः २१ अगस्त्यस्यनद्यइति द्विजातिर्वेदमंत्रतः शूद्रः पौराणमंत्रेण दत्वार्घ्यंप्रणमेत्सु॰
धीः २२ राजपुत्रिमहाभागेऋषिपत्निवरानने लोपामुद्रेनमस्तुभ्यमर्घ्यंमेप्रतिगृह्यतां २३ ततोहोमंप्रकुर्वीतअर्घ्यमंत्रेण
मंत्रवित् आज्येनाष्टसहस्रंवाशतमष्टोत्तरंतुवा २४ कृत्वेवंचततोगस्त्यंप्रणिपत्यविसर्जयेत्. अचिंत्यचरितागस्त्ययथागस्त्यः
प्रपूजितः २५ ऐहिकामुष्मिकंदत्वाकार्यसिद्धिंव्रजस्वभो विसर्जयित्वागस्त्यंतंविप्रायप्रतिपादयेत् २६ वेदवेदांगविदुषेद
रिद्रायकुटुंबिने अगस्त्योद्विजरूपेणप्रतिगृह्णातुसत्कृतः २७ अगस्त्यः प्रतिगृह्णातिअगस्त्योवैददातिच उभयोस्तारको
गस्त्योअगस्त्यायनमोनमः २८ मंत्रद्वयेनदद्यात्तुब्राह्मणश्चजपेदमुं वैदिकंपूर्वविहितंपौराणंशूद्रएवतु २९ श्वेतांधेनुंत॰
तोदद्याद्धेमशृंगींपयस्विनीं सहवत्सांरौप्यखुरांताम्रपृष्ठींसुशोभनां ३० कांस्यदोहनिकायुक्तांघंटावस्त्रसमन्वितां एवंस

प्तदिनंदत्वाअर्घ्यंप्रागुदयान्मुने ३० सप्तमेदिवसेधेनुंप्रदद्याच्चसदक्षिणां एवंकृत्वासप्तवर्षमकामश्चेन्नजन्मभाक् ३२
सकामश्चक्रवर्तित्वंरूपारोग्यसमन्वितः ब्राह्मणःस्याच्चतुर्वेदसर्वशास्त्रविशारदः ३३ क्षत्रियःपृथिवींसर्वांप्राप्नोत्य
र्णवमेखलां वैश्यश्चेद्धान्यनिष्पत्तिंगोधनंचापिविंदति ३४ शूद्राणांधनमारोग्यंसप्तचैवाधिकंभवेत् स्त्रीणांपुत्राः
प्रजायंतेसौभाग्यगृहमृद्धिमत् ३५ विधवानांमहत्पुण्यंवर्धतेविधिनंदन कन्याभर्तारमाप्नोतिव्याधेर्मुच्येतदुःखि
तः ३६ येषुदेशेष्वगस्त्यस्यपूजनंक्रियतेनरैः तेषुदेशेषुपर्जन्यःकामवर्षीप्रजायते ३७ ईतयःप्रशमंयांतिनश्यंति-
व्याधयस्तथा पठंतियेत्वगस्त्यस्यअर्घ्यंशृण्वंतिकेचन ३८ तेसर्वेपापनिर्मुक्ताश्चिरंस्थित्वामहीतले हंसयुक्तविमा
नेनस्वर्गेयांतिनरोत्तमाः ३९ यावज्जीवंकरिष्यंतिनिष्कामंमुक्तिभागिनः ४० इतिश्रीस्कंदपुराणेश्रा॰ अग॰
स्त्यार्घ्यविधिर्नामाष्टाविंशोऽध्यायः २८ ईश्वरउवाच सनत्कुमारवक्ष्याभिउक्तानांव्रतकर्मणा कालेकदातुकिंकार्यं
तच्छृणुष्वमहामुने १ कातिथिःश्रावणेमासिकिंकालव्यापिनीभवेत् ग्राह्यामधानंकिंतत्रपूजाजागरणादिकं २ तत्तत्क
थनकालेतुकेषांचित्कालईरितः नक्तव्रतस्यकालस्तुउक्तस्तद्व्रतकर्मणि ३ प्रधानंरात्रिभुक्तिस्तुभोजनंभावयुविदवा

उद्यापनंतुसर्वेषांतत्तद्व्रततिथौभवेत् ४ असंभवेतुपंचांगशुद्धेःस्यादधिवासनं द्वितीयदिवसेकुर्याद्धोमादिविधिमाहृतः
५ धारणापारणाच्चैवह्रासवृद्धी नकारणं नभः शुक्लप्रतिपदिसंकल्प्योपोषणंचरेत् ६ द्वितीयदिवसेभुक्तिस्ततोन्यस्मि-
न्नुपोषणं एवंक्रमेणकुर्वीतहविष्याशीतुपारणे ७ एकादशीपारणाहेउपवासत्रयंतदा रविवारव्रतार्चायाः कालः स्याद्धा
तेरवह्नि ८ सोमवारेप्रधानः स्यात्सायंकालः प्रकीर्तितः भौमेबुधेगुरौमुख्यः प्रातः कालश्चपूजने ९ शुक्रवारेपूजनंस्यात्क
लेरात्रौचजागरः नृसिंहपूजनेमंदेसायंकालश्चपूजनं १० शनिव्रतेशनेर्दानेमध्याह्नोमुख्यइष्यते हनूमतोपिमध्यान्हःश्र
तरश्वत्थपूजनं ११ रोटकाख्येव्रतेवत्सप्रतिपत्सोमसंयुता त्रिमुहूर्तोत्तरासास्यादन्यथापूर्वयोगिनी १२ औदुंबरीद्वितीया-
तुसायान्हव्यापिनीमता तृतीयासंयुताग्राह्याद्वयोश्चेत्पूर्ववेधिता १३ तृतीयास्वर्णगौर्याख्यासाचतुर्थीयुताभवेत् चतु-
र्थीगणनाथस्यमातृविद्धाप्रशस्यते १४ नागानांपूजनेशस्ताषष्ठीयुक्ताचपंचमी सूपोदनव्रतेषष्ठीसायान्हेसप्तमीयुता
१५ मध्यान्हव्यापिनीग्राह्यासप्तमीशीतलाव्रते पवित्रारोपणेष्टम्यांदेव्यारात्रियुतातिथिः १६ कुमारीनवमीनक्तव्यापिनी
तुप्रशस्यते आशासंज्ञातुदशमीसानक्तव्यापिनीभवेत् १७ त्याज्याविद्धैकादशीतुतत्रवेधंमुनेशृणु अरुणोदयवेधस्तुद

शम्यावैष्णवान्प्रति १८ आदित्योदयवेधस्तुस्मार्तानांनिंद्यएवसः अरुणोदयकालस्तुयामार्धंचरमंनिशः १९ एवंरीत्यायस्य
भवेद्द्वादशीसापवित्रके त्रयोदशीत्वनंगस्यव्रतेस्याद्रात्रियोगिनी २० द्वितीययामेतत्रापिसाप्रशस्ततराभवेत् पवित्रारोप·
पोशंभोरात्रिगास्याच्चतुर्दशी २१ अतिप्रशस्तातत्रापिनिशीथव्यापिनीतुया उपाकर्मणिचोत्सर्गेपूर्णिमाश्रवणंचभं २२·
त्रिमुहूर्तेद्वितीयेन्हितदाग्राह्यंपरंदिनं नोचेदनुष्ठितः पूर्वंतैत्तिराणांचबह्वृचां २३ तैत्तिरीयांचयजुषांमुहूर्तत्रयगामपिउ
त्तरस्मिन्पूर्वमेवदिनंस्यात्कर्मणिद्वयोः २४ मुहूर्तानंतरंपूर्वंदिनेचेत्संगतिर्भवेत् पूर्णिमाश्रवणर्क्षंचमुहूर्तद्वितयात्तुरा २५
उत्तरस्मिन्समाप्तंचेत्तदापूर्वदिनंभवेत् हस्तभंत्वपराह्णेस्याद्ग्राह्यंतत्सामवेदिभिः २६ दिनद्वयेतदास्याच्चेत्पूर्वमेवदिनंभ
वेत् उपाकर्मप्रयोगांतेकालोदीपस्यसंसदः २७ श्रवणाकर्मणिप्रोक्तः कालःसर्वबलोतथा पर्वणोन्हिभवेद्रात्रौस्वस्व
गृह्यानुसारतः २८ पौर्णिमात्रप्रशस्तावास्यादस्तमययोगिनी हयग्रीवोत्सवेपूर्णामध्यान्हव्यापिनीभवेत् २९ अपराह्ण
व्यापिनीस्याद्रक्षाबंधनकर्मणि चंद्रोदयव्यापिनीचस्यात्संकष्टचतुर्थिका ३० उभयत्रयदासास्यान्नस्याद्वापूर्वगाभवेत्
चतुर्थीचतृतीयायांमहापुण्यफलप्रदा ३१ कर्तव्याव्रतिभिर्वत्सगणनाथसुतोषिणी गणेशगौरीबहुलाव्यतिरिक्ताः

प्रकीर्तिताः ३२ चतुर्थ्याः पंचमीविद्धादेवतांतरपूजने निशीथव्यापिनीग्राह्याकृष्णजन्माष्टमीतिथिः ३३ षट्प्रकारातुसर्वत्रनि
र्णयेतिथिरिष्यते पूर्णव्याप्तिर्द्वयोरन्होर व्याप्तिरपिकेवला ३४ अंशतश्चसमाव्याप्तिरंशतोविषमातथा संपूर्णव्याप्तिरेकत्र
अंशतश्चपरेहनि ३५ अंशतोव्याप्तिरेकत्रअव्याप्तिरपरत्रच पक्षत्रयेतुसंदेहोयथानास्तितथाशृणु ३६ अंशतोविषमव्याप्ता
वधिकाव्याप्तिरुत्तमा एकत्रपूर्णाचान्यत्रसापूर्णाचोच्यतेतिथिः ३७ अव्याप्तिरंशतोव्याप्तिस्तत्रांशव्याप्तिरुत्तमा अंशव्या
प्तिर्यदापूर्णाअंशतश्चसमायदा ३८ संशयस्तत्रभवतितस्यस्यान्निर्णयोभिदा कचिद्धवेद्युग्मवाक्याद्वारनक्षत्रयोगतः ३९
प्रधानद्वययोगेनपारणायोगतः क्वचित् जन्माष्टम्यांतुसंदेहेत्रिपक्षेतुपराभवेत् ४० अष्टम्यंतेपारणंस्याद्यदियामत्रयात्तु
रा समाप्येततदूर्ध्वंचेदष्टम्युषसि पारणा ४१ व्रतेपिठोरसंज्ञेमामध्यान्ह व्यापिनीशुभा वृषभाणांपूजनेतुअमासायंतनीभ
वेत् ४२ दर्भाणांसंचयेचैवसंगवः कालईरितः त्रिंशत्पुण्याः पूर्वनाड्यः कर्कसंक्रमणेरवेः ४३ पुण्याःषोडशनाड्यस्तुसिंहे
पूर्वाः पराअपि केचिदिच्छंतिमुनयः पूर्वाएवतुषोडश ४४ अगस्त्यार्घ्यस्यकालस्तुव्रतएवप्रकीर्तितः अयंतेकथितोवत्सक
र्मणांकालनिर्णयः ४५ यइमंशृणुते ध्यायंयश्चापिपरिकीर्तयेत् नभोमासिकृतानांसव्रतानांलभतेफलं ४६ इतिश्रीस्कं

दपु० ईश्वरसन० व्रतकर्मणांकालनिर्णयकथनंनामैकोनत्रिंशोऽध्यायः २९ ईश्वरउ० कियत्कियत्तेकथितंमाहात्म्यं
श्रावणस्यहि सर्ववर्णयितुंशक्यंनालंवर्षशतैरपि १ प्रियेयंममकल्याणि हुत्वादक्षाध्वरेतनुं हिमाचलसुताजातातेनेयं
योजितामया २ सेवनेश्रावणेमासितेनमेप्रियकृन्नभाः नातिशीतोनातिचोष्णः श्रावणेमासिभूपतिः ३ उद्धूलयित्वास्वतनुं
सर्वांश्रौतेनभस्मना श्वेतेनाथजलार्द्रेणात्रिपुंड्रान्द्वादशांश्चरेत् ४ भालेवक्षसिनाभौचबाह्वोः कूर्परयोस्तथा मणिबंधद्व
येचैवकंठेमूर्धनिपृष्ठके ५ मानस्तोकेतिमंत्रेणसद्योजातादिमंत्रतः षडक्षरेणमंत्रेण भस्मनाशोभयेत्तनुं ६ धारयेच्चै
वरुद्राक्षानष्टाधिकशतंतनौ द्वात्रिंशद्धारयेत्कंठेमूर्ध्निद्वाविंशतिस्तथा ७ कर्णद्वयेद्वादशैवचतुर्विंशत्करद्वये अष्टाष्ट
भुजयोर्भालेएकमेकंशिखागतं ८ एवंकृत्वातुमामर्च्यजपेत्पंचाक्षरंमनुं श्रावणेमासिविप्रेंद्रसोहमेवनसंशयः ९ ज्ञा
त्वेमंमत्प्रियंमासंममतोषायकेशवः कृष्णाष्टमीचतत्रापिममप्रियतरातिथिः १० देवक्याजठरात्तस्मिन्दिनेप्रादुरभूद्धरिः
एतत्तेकथितंलेशात्किमन्यच्छ्रोतुमर्हसि ११ सनत्कुमारउ० यद्यत्कृत्यंपार्वतीशनभोमासित्वयेरितं आनंदाब्धौनि
मग्नत्वाद्धृत्स्वात्राववधारणा १२ नस्थिताक्रमशोनाथब्रूहिसर्वंयथातथा श्रुत्वाचाव्यवधानेनधारयिष्यामिभक्तितः १३

ईश्वरउ० शृणुष्वावहितोभूत्वाअनुक्रमणिकांशुभां आदौप्रश्नः शौनकस्यततः सूतस्यचोत्तरं १४ श्रोतुर्गुणास्तवप्रश्नो·
निरुक्तिः श्रावणस्यच तस्यस्तुतिः पुनःप्रश्नस्तवविस्तरशोमुने १५ ममस्तुतिस्त्वत्कृताचनामनिर्वचनादिना भूयोममो
त्तरंतत्रउद्देशः क्रमतोखिलं१६विशेषतस्तवप्रश्नस्ततोनक्तव्रतेविधिः रुद्राभिषेककथनंलक्षपूजाविधिस्ततः १७ दीपदा
नंपरित्यागः कस्यचित्प्रियवस्तुनः फलंरुद्राभिषेकेणतथापंचामृतेनच १८ फलंभूशयनस्यापितथामौनव्रतस्यच धारणा
पारणाचैवततोमासोपवासनं १९ सोमाख्यानंततोलक्षरुद्रवर्तिविधिः स्मृतः कोटिलिंगविधानंचव्रतंचानोदनाभिधं २०
हविष्याशनमप्यत्रपत्रावल्यांचभोजनं शाकत्यागोभूशयनंप्रातःस्नानंदमः शमः २१ स्फटिकादिषुलिंगेषुअर्चाजप
फलंततः प्रदक्षिणानमस्कारावेदपारायणंतथा २२ विधिःपुरुषसूक्तस्यग्रहयज्ञविधिस्ततः रविचंद्रकुजानांचक्रमशो
व्रतविस्तरः २३ बुधगुर्वोर्व्रतंपश्चाच्छुक्रेजीवंतिकाव्रतं शनौनृसिंहस्यशनेरनिलाश्वत्थयोस्तथा २४ रोटकव्रतमाहात्म्यंत·
तऔदुंबरव्रतं स्वर्णगौरीव्रतंपश्चाद्दूर्वागणपतिव्रतं २५ नागव्रतंचपंचम्यांषष्ठ्यांसूपौदनव्रतं शीतलाख्यंव्रतंदेव्याः पवि
त्रारोपणंततः २६ दुर्गाकुमारीपूजाचआशाव्रतमतःपरं उभयेकादशीपश्चात्पवित्रारोपणंहरेः २७ अनंगस्यत्रयोदश्यांत

तः शंभोः पवित्रकं उपाकर्मोत्सर्जने च श्रवणाकर्म चैव हि २८ ततः सर्पबलिर्वाजिग्रीवजन्ममहोत्सवः सभादीपस्तथा
रक्षाबंधः संकष्टनाशनं २९ व्रतं ततः कृष्णजन्माष्टमीव्रतकथानकं व्रतं पिठोरसंज्ञं तु पोलासंज्ञं वृषव्रतं ३० दर्भाणां संग्र
हश्चैव नदीनां सरजस्कता सिंहे गोप्रसवे शांतिः कर्कसिंहनभेषु च ३१ दानानि स्नानमाहात्म्यं माहात्म्यं श्रवणं तथा ततो
वाचकपूजा च अगस्त्यार्घ्यं ततः परं ३२ कर्मणां च व्रतानां च कालनिर्णय ईरितः एतन्मासिकृतानां सव्रतानां फलभाग्भवेत्
३३ सनत्कुमार त्वद्दये धारयस्व क्रमं शुभं ३४ यइमं शृणुते ध्यायं माहात्म्यं श्रावणस्य यत् तत्फलं समवाप्नोति व्रतानां चैव
यत्फलं ३५ किं बहूक्तेन विप्रर्षे श्रावणे विहितं तु यत् तत्र चैकस्य कर्तापि मम संप्रियतरो भवेत् ३६ सूत उवाच सनत्कुमारः
पीत्वेवं शिववाक्यामृतं परं श्रुतिद्वारा चापमोदं कृतकृत्यो बभूव ह ३७ नभोमासं स्तुवन् शंभुं स्मरन्सत्हृदये शिवं शंकरेणा
भ्यनुज्ञातो ययौ देवर्षिसत्तमः ३८ इदं रहस्यं परमं नाख्येयं यस्य कस्यचित् भवतो योग्यता दृष्ट्वा मये तत्कथितं प्रभो ३९
इति श्रीस्कंदपुराणे ईश्वरसनत्कुमारसंवादे श्रावणमासमाहात्म्ये अनुक्रमणिकाकथनं नाम त्रिंशोऽध्यायः ३० समाप्तं
हें पुस्तक मुंबई मध्ये बापू हरशेट देवळेकर याणीं आपले छापखान्यांत छापिलें. शके १७८५ रुधिरोद्गारीनामसंवत्सरे आषाढशु० १५

